एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥

एको वशी निष्क्रियाणां बहूनामेकं रूपं बहुधा यः करोति।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्।
तत् कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥

एको हꣳसो भुवनस्यास्य मध्ये स एवाग्निः सलिले संनिविष्टः।
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥

स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः।
प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः ॥

स तन्मयो ह्यमृत ईशसंस्थो ज्ञः सर्वगो भुवनस्यास्य गोप्ता।
य ईशेऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय ॥

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।
तꣳह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥

निष्कलं निष्क्रियꣳ शान्तं निरवद्यं निरञ्जनम्।
अमृतस्य परꣳसेतुं दग्धेन्धनमिवानलम् ॥

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥

### ब्रह्मविद्याऽधिकारिनिरूपणम्

तपःप्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान्।
अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम् ॥

वेदान्ते परमं गुह्यं पुरा कल्पे प्रचोदितम्।
नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वै पुनः ॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

प्रकाशन्ते महात्मन इति ॥

—*—

# शाक्तोपनिषदः

## त्रिपुरोपनिषत्

(ऋग्वेदीया)

वाङ्मे मनसि — इति शान्तिः

चिच्छक्तिस्वरूपम्

तिस्रः पुरस्त्रिपथा विश्वचर्षणा अत्राकथा अक्षराः संनिविष्टाः।
अधिष्ठायैना अजरा पुराणी महत्तरा महिमा देवतानाम् ॥

नवयोनिं नव चक्राणि दीधिरे नवैव योगा नव योगिन्यश्च।
नवानां चक्रा अधिनाथाः स्योना नव भद्रा नव मुद्रा महीनाम् ॥

एका स आसीत् प्रथमा सा नवासीदा सोनविंशादा सोनत्रिंशात्।
चत्वारिंशादथ तिस्रः समिधा उशतीरिव मातरो माऽऽविशन्तु ॥

ऊर्ध्वज्वलनं ज्योतिरग्रे तमो वै तिरश्चीनमजरं तद्रजोऽभूत्।
आनन्दनं मोदनं ज्योतिरिन्दोरेता उ वै मण्डला मण्डयन्ति ॥

यास्तिस्रो रेखाः सदनानि भूस्त्रीस्त्रिविष्टपास्त्रिगुणास्त्रिप्रकाराः।
एतत्त्रयं पूरकं पूरकाणां मन्त्रप्रतते मदनो मदन्या ॥

मदन्तिका मानिनी मङ्गला च सुभगा च सा सुन्दरी सिद्धिमत्ता।
लज्जा मतिस्तुष्टिरिष्टा च पुष्टा लक्ष्मीरुमा ललिता लालपन्ती॥

इमां विज्ञाय सुधया मदन्ती परिसृता तर्पयन्तः स्वपीठम्।
नाकस्य पृष्ठे महतो वसन्ति परं धाम त्रैपुरं चाविशन्ति॥

कामो योनिः कामकला वज्रपाणिर्गुहा हसा मातरिश्वाऽभ्रमिन्द्रः।
पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमाताऽऽदिविद्या॥

षष्ठं सप्तममथ वह्निसारथिमस्या मूल त्रिकमादेशयन्तः।
कथ्यं कविं कल्पकं काममीशं तुष्टुवांसो अमृतत्वं भजन्ते॥

पुरं हन्त्रीमुखं विश्वमातू रवे रेखा स्वरमध्यं तदेषा।
बृहत्तिथिर्दश पञ्चादिनित्या सषोडशिकं पुरमध्यं बिभर्ति॥

यद्वा मण्डलाद्वा स्तनबिम्बमेकं मुखं चाधस्त्रीणि गुहासदनानि।
कामीकलां कामरूपां चिकित्वा नरो जायते कामरूपश्च काम्यः॥

अधमाधिकारिणामनुष्ठानं तत्फलं च

परिसृतं झषमाजं पलं च भक्तानि योनिः सुपरिष्कृताश्च।
निवेदयन् देवतायै महत्यै स्वात्मीकृते सुकृते सिद्धिमेति॥

सृण्येव सितया विश्व चर्षणिः पाशेनैव प्रतिबध्नात्यभीकान्।
इषुभिः पञ्चभिर्धनुषा च विद्धत्यादिशक्तिररुणा विश्वजन्या॥

निष्कामोपासकस्य ब्रह्मत्वप्राप्तिः

भगः शक्तिर्भगवान् काम ईश उभा दाताराविह सौभगानाम्।
समप्रधानौ समसत्त्वौ समोजौ तयोः शक्तिरजरा विश्वयोनिः॥

परिसृता हविषा भावितेन प्रसंकोचे गलिते वैमनस्कः।
शर्वः सर्वस्य जगतो विधाता धर्ता हर्ता विश्वरूपत्वमेति॥

इयं महोपनिषत्त्रैपुर्या यामक्षयं परमा गीर्भिरीट्टे।
एषर्ग्यजुः परमेतच्च सामायमथर्वेयमन्या च विद्या ॥

ओं ह्रीमों ह्रीमित्युपनिषत् ॥

—*—

# त्रिपुरातापिन्युपनिषत्

(अथर्ववेदीया)

भद्रं कर्णेभिः - इति शान्तिः

प्रथमोपनिषत्

अथैतस्मिन्नन्तरे भगवान् प्राजापत्यं वैष्णवं विलयकारणं रूपमाश्रित्य त्रिपुराऽभिधा भगवतीत्येवमादिशक्त्या भूर्भुवः स्वस्त्रीणि स्वर्गभूपातालानि त्रिपुराणि ह्रमायाऽऽत्मकेन ह्रींकारेण ह्रल्लेखाख्या भवती त्रिकूटावसाने निलये विलये धाम्नि महसा घोरेण व्याप्नोति। सैवेयं भगवती त्रिपुरेति व्यापठ्यते।

त्रिपुरामहामनुः

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो यो नः प्रचोदयात् परो रजसेऽसावदोम् ॥

जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥

शताक्षरी परमा विद्या त्रयीमयी साष्टार्णा त्रिपुरा परमेश्वरी।
आद्यानि चत्वारि पदानि परब्रह्मविकासीनि।
द्वितीयानि शाक्तानि। तृतीयानि शैवानि ॥

शिवशक्तियोगात् प्रपञ्चसृष्टिः

तत्र लोका वेदाः शास्त्राणि पुराणानि धर्माणि वै चिकित्सितानि ज्योतींषि शिवशक्तियोगादित्येवं घटना व्यापठ्यते ॥

वाग्भवकूटस्य गायत्र्या समन्वयः

अथैतस्य परं गह्वरं व्याख्यास्यामः। महामनुसमुद्भवं तदिति ब्रह्म शाश्वतं परो भगवान् निर्लक्षणो निरञ्जनो निरुपाधिराधिरहितो देव उन्मीलते पश्यति विकासते चैतन्यभावं कामयत इति स एको देवः शिवरूपी दृश्यत्वेन विकासते यतिषु यज्ञेषु योगिषु कामयते कामं जायते । स एष निरञ्जनोऽकामत्वेनोज्जृम्भते अकचटतपयशान् सृजते । तस्मादीश्वरः कामोऽभिधीयते । तत्परिभाषया कामः ककारं व्याप्नोति। काम एवेदं तत्तदिति ककारो गृह्यते। तस्मात्तत्पदार्थ इति य एवं वेद । सवितुर्वरेण्यमिति षूङ् प्राणिप्रसवे सविता प्राणिनः सूते प्रसूते शक्तिः सूते।

त्रिपुरा शक्तिराद्येयं त्रिपुरा परमेश्वरी।
महाकुण्डलिनी देवी जातवेदसमण्डलम् ॥

योऽधीते सर्वं व्याप्यते। त्रिकोणशक्तिरेकारेण महाभागेन प्रसूते । तस्मादेकार एवा गृह्यते । वरेण्यं श्रेष्ठं भजनीयमक्षरं नमस्कार्यम्। तस्माद्वरेण्यमेकाराक्षरं गृह्यत इति य एवं वेद। भर्गो देवस्य धीमहीत्येवं व्याख्यास्यामः । धकारो धारणा । धियैव धार्यते भगवान् परमेश्वरः । भर्गो देवो मध्यवर्ति तुरीयमक्षरं साक्षात्तुरीयं सर्वं सर्वान्तरभूतं तुरीयाक्षरमीकारं पदानां मध्यवर्तीत्येवं व्याख्यातं भर्गोरूपं व्याचक्षते। तस्माद्भर्गो देवस्य धीत्येवमीकाराक्षरं गृह्यते। महीत्यस्य व्याख्यानं महत्त्वं जडत्वं

काठिन्यं विद्यते यस्मिन्नक्षरे तन्महि । लकारः परं धाम । काठिन्याढ्यं ससागरं सपर्वतं ससप्तद्वीपं सकाननमुज्ज्वलद्रूपं मण्डलमेवोक्तं लकारेण। पृथ्वी देवी महीत्यनेन व्याचक्षते। धियो यो नः प्रचोदयात् । परमात्मा सदाशिव आदिभूतः परः स्थाणुभूतेन लकारेण ज्योतिर्लिङ्गमात्मानं धियो बुद्धयः परे वस्तुनि ध्यानेच्छारहिते निर्विकल्पके प्रचोदयात् प्रेरयेदित्युच्चाररहितं चेतसैव चिन्तयित्वा भावयेदिति । परो रजसेऽसावदोमिति तदवसाने परंज्योतिरमलं हृदि दैवतं चैतन्यं चिल्लिङ्गं हृदयागारवासिनी हृल्लेखेत्यादिना स्पष्टं वाग्भवकूटं पञ्चाक्षरं पञ्चभूतजनकं पञ्चकलामयं व्यापठ्यत इति। य एवं वेद।

### कामकूटस्य गायत्र्या समन्वयः

अथ तु परं कामकालभूतं कामकूटमाहुः । तत् सवितुर्वरेण्यमित्यादिद्वात्रिंशदक्षरीं पठित्वा तदिति परमात्मा सदाशिवोऽक्षरं विमलं निरुपाधितादात्म्यप्रतिपादनेन हकाराक्षरं शिवरूपं अनक्षरमनक्षरं व्यालिख्यत इति तत्परागव्यावृत्तिमादाय शक्तिं दर्शयति । तत् सवितुरिति पूर्वेणाध्वना सूर्याधश्चन्द्रिकां व्यालिख्य मूलादिब्रह्मरन्ध्रगं साक्षरमद्वितीयमाचक्षत इत्याह भगवन्तं देवं शिवशक्त्यात्मकमेवोदितम्।

शिवोऽयं परमं देवं शक्तिरेषा तु जीवजा।
सूर्याचन्द्रमसोर्योगाद्धंसस्तत्पदमुच्यते ॥

तस्मादुज्जृम्भते कामः कामान् कामः परः शिवः ।
कार्णोऽयं कामदेवोऽयं वरेण्यं भर्ग उच्यते ॥

तत् सवितुर्वरेण्यं भर्गो देवः क्षीरं सेवनीयमक्षरं समधुघ्नमक्षरं परमात्मजीवात्मनोर्योगात् तदिति स्पष्टमक्षरं तृतीयं

ह् इति तदेव सदाशिव एव निष्कल्मषो द्यो देवोऽन्त्यमक्षरं व्याक्रियते परमं पदम्। धीति धारणं विद्यते जडत्वधारणं महीति लकारः शिवाधस्तात्तु लकारार्थः स्पष्टमन्त्यमक्षरं परमं चैतन्यं धियो यो नः प्रचोदयात् । परो रजसेऽसावदोमित्येवं कूटं कामकलाऽऽलयं षडध्वपरिवर्तको वैष्णवं परमं धामैति भगवांश्चैतस्माद्य एवं वेद ॥

शक्तिकूटस्य गायत्र्या समन्वयः

अथैतस्मादपरं तृतीयं शक्तिकूटं प्रतिपद्यते द्वात्रिंशदक्षर्या गायत्र्या। तत् सवितुर्वरेण्यं तस्मादात्मन आकाश आकाशाद्वायुः स्फुरते तदधीनं वरेण्यं समुदीयमानं सवितुर्वा योग्यो जीवात्मपरमात्मसमुद्भवस्तं प्रकाशशक्तिरूपं जीवाक्षरं स्पष्टमापद्यते। भर्गो देवस्य धीत्यनेनाधाररूपशिवात्माक्षरं गण्यते महीत्यादिना शेषं काम्यं रमणीयं दृश्यं काम्यं रमणीयं शक्तिकूटं स्पष्टीकृतमिति।

कामाकामधियां विशिष्टविद्याफलम्

एवं पञ्चदशाक्षरं त्रैपुरं योऽधीते स सर्वान् कामानवाप्नोति स सर्वान् भोगानवाप्नोति स सर्वान् लोकान् जयति स सर्वा वाचो विजृम्भयति स रुद्रत्वं प्राप्नोति स वैष्णवं धाम भित्त्वा परं ब्रह्म प्राप्नोति य एवं वेद ॥

शक्तिशिवादिद्वादशविद्योद्धारः

एवमाद्यां विद्यामभिधायैतस्याः शक्तिकूटं शक्ति शिवाद्या। लोपामुद्रेयं द्वितीये धामनि । पूर्वेणैव मनुना बिन्दुहीना शक्तिभूतहृल्लेखा क्रोधमुनिनाऽधिष्ठिता तृतीये धामनि। पूर्वस्या एव विद्याया यद्वाग्भवकूटं तेनैव मानवीं चान्द्रीं कौबेरीं

विद्यामाचक्षते। मदनाधः शिवं वाग्भवम्, तदूर्ध्वं कामकलामयं, शक्त्यूर्ध्वं शाक्तमिति मानवी विद्या चतुर्थे धामनि । शिव शक्त्याख्यं वाग्भवं तदेवाधः शिवशक्त्याख्यमन्यत्तृतीयं चेयं चान्द्री विद्या पञ्चमे धामनि ध्येयेयम् । चान्द्री कामाधः शिवाद्यकामा सैव कौबेरी षष्ठे धामनि व्याचक्षत इति य एवं वेद। हित्वेकारं तुरीयस्वरं सर्वादो सूर्याचन्द्रमस्केन कामेश्वर्यैवागस्त्यसंज्ञा सप्तमे धामनि । तृतीयमेतस्या एव पूर्वोक्तायाः कामाद्यं द्विधाऽधः कं मदनकलाऽऽद्यं शक्तिबीजं वाग्भवाद्यं तयोरर्धाविशिरस्कं कृत्वा नन्दिविद्येयमष्टमे धामनि। वाग्भवमागस्त्यं वागर्थकलामयं कामकलाऽभिधं सकलमायाशक्तिः प्रभाकरी विद्येयं नवमे धामनि। पुनरागस्त्यं वाग्भवं शक्तिमन्मथशिवशक्तिमन्मथोर्वीमायाकामकलालयं चन्द्रसूर्यानलधूर्जटिमहिमायं तृतीयं षण्मुखीयं विद्या दशमे धामनि। विद्याप्रकाशितया भूय एवागस्त्यविद्यां पठित्वा भूय एवेमामन्त्यमायां परमशिवविद्येयमेकादशे धामनि।

भूय एवागस्त्यं पठित्वा एतस्या एव वाग्भवं यद्धनजं कामकलाऽऽलयं च तत्सहजं लोपामुद्रायाः शक्तिकूटराजं पठित्वा वैष्णवी विद्या द्वादशे धामनि व्याचक्षत इति य एवं वेद।

(द्वादशविद्याः — आदिविद्या तु क ए ई ल ह्रीं, हसकहलह्रीं, सकलह्रीम् । अत्राद्यखण्डं वाग्भवकूटं, द्वितीयं कामकूटं, तृतीयं शक्तिकूटम्। व्यष्टिसमष्टिजाग्रदादिद्वादशधामसु भावनीयशक्तिशिवादिद्वादशविद्योच्यते । सक इति शक्ति-शिवविद्या (१), हसकहलह्रीमिति लोपामुद्राविद्या (२), हसकहलह्री इति क्रोधमुनिविद्या (३), हसकहलह्रीं क ए ई ल ह्रीं सकलह्रीं इति मानवी विद्या। (४) हसकहलह्रीं क ए ईलह्रीं हसक

हलह्रीं सकलह्रीं इति चान्द्री विद्या (५), हसकहलह्रीं क ए ईल ह्रीं हसकहलह्रीं सकलह्रीं हसकहलह्रीं इति कौबेरी विद्या (६), हसकएलह्रीं हसहसकहलह्रीं हसहससकलह्रीं इत्यगस्त्यविद्या (७), हहसकहसकएलह्रीं हसहसकहलह्रीं हससकलह्रीं इति नन्दिविद्या (८), क ए ई ल ह्रीं हसकएलह्रीं हसहस कहलह्रीं हससकलह्रीं हसकहलह्रीं सकलह्रीं इति प्रभाकरी विद्या (९) ह्रीं क्लीं हं सः क्लीं लं ह्रीं हसकहलह्रीं सोहं क्लीं हंसः ह्रीं हंसः सोहं हंसः इति षण्मुखी विद्या (१०) ह्रीं क्लीं हंसः क्लीं लं ह्रीं हसकहलह्रीं सोहं क्लीं हंसः ह्रीं हंसः सोहं हंसः हसकएलह्रीं हसहसकहलह्रीं हससकलह्रीं इति परमशिवविद्या (११), हसकएलह्रीं हसहसकहलह्रीं हससकलह्रीं क ए ई ल ह्रीं हसकहलह्रीं क ए ई ल ह्रीं हसकहलह्रीं सकलह्रीं हसकहलह्रीं हसकहलह्रीं सकलह्रीं इति वैष्णवी विद्या (१२)

महात्रिपुरादेवीध्यानम्

तान् होवाच भगवान् सर्वे यूयं श्रुत्वा पूर्वां कामाख्यां तुरीयरूपां तुरीयातीतां सर्वोत्कटां सर्वमन्त्रासनगतां पीठोपपीठदेवतापरिवृतां सकलकलाव्यापिनीं देवतां सामोदां सपरागां सहृदयां सामृतां सकलां सेन्द्रियां सदोदितां परां विद्यां स्पष्टीकृत्वा हृदये निधाय विज्ञायानिलयं गमयित्वा त्रिकूटां त्रिपुरां परमां मायां श्रेष्ठां परां वैष्णवीं संनिधाय हृदयकमलकर्णिकायां परां भगवतीं लक्ष्मीं मायां सदोदितां महावश्यकरीं मदनोन्मादनकारिणीं धनुर्बाणधारिणीं वाग्विजृम्भिणीं चन्द्रमण्डलमध्यवर्तिनीं चन्द्रकलां सप्तदशीं महानित्योपस्थितां पाशाङ्कुशमनोज्ञपाणिपल्लवां समुद्यदर्कनिभां त्रिणेत्रां विचिन्त्य देवीं महालक्ष्मीं सर्वलक्ष्मीमयीं सर्वलक्षणसंपन्नां हृदये

चैतन्यरूपिणीं निरञ्जनां त्रिकूटाख्यां स्मितमुखीं सुन्दरीं महामायां सर्वसुभगां महाकुण्डलिनीं त्रिपीठमध्यवर्तिनीम-कथादिश्रीपीठे परां भैरवीं चित्कलां महात्रिपुरां देवीं ध्यायेन्महाध्यानयोगेनेयमेवं वेदेति महोपनिषत्।

—*—

## द्वितीयोपनिषत्

### त्रिपुराविद्या

अथातो जातवेदसे सुनवाम सोममित्यादि पठित्वा त्रैपुरी व्यक्तिर्लक्ष्यते। जातवेदस इत्येकर्चसूक्तस्याद्यमध्यमावसानेषु तत्र स्थानेषु विलीनं बीजसागररूपं व्याचक्ष्वेत्यृषय ऊचुः।

तान् होवाच भगवान्। जातवेदसे सुनवाम सोमं तदन्त्य-मवार्णीं विलोमेन पठित्वा प्रथमस्याद्यं तदेव दीर्घं द्वितीयस्याद्यं सुनवाम सोममित्येनेन कौलं वामं श्रेष्ठं सोमं महासौभाग्यमाचक्षते।

### महाविद्येश्वरीविद्या

सर्वसंपत्तिभूतं प्रथमं निवृत्तिकारणं द्वितीयं स्थितिकारणं तृतीयं सर्गकारणमित्यनेन करशुद्धिं कृत्वा त्रिपुराविद्यां स्पष्टीकृत्वा जातवेदसे सुनवाम सोममित्यादि पठित्वा महाविद्येश्वरीविद्यामचक्षते। त्रिपुरेश्वरीं जातवेदस इति जाते आद्यक्षरे मातृकायाः शिरसि बैन्दवममृतरूपिणीं कुण्डलिनीं त्रिकोणरूपिणीं चेति वाक्यार्थः।

### सर्वरक्षाकरीविद्या

एवं प्रथमस्याद्यं वाग्भवं द्वितीयं कामकलामयं जात इत्यनेन परमात्मनोज्जृम्भणम्। जात इत्यादिना परमात्मा शिव उच्यते।

जातमात्रेण कामी कामयते काममित्यादिना पूर्णं व्याचक्षते। तदेव सुनवाम गोत्रारूढं मध्यवर्तिनाऽमृतमध्येनार्णेन मन्त्रार्णान् स्पष्टीकृत्वा गोत्रेति नामगोत्रायामित्यादिना स्पष्टं कामकलालयं शेषं वाममित्यादिना पूर्वेणाध्वना विद्येयं सर्वरक्षाकरी व्याचक्षते।

त्रिपुरेशी-आत्मासनरूपिणी -शक्तिशिवरूपिणीविद्या

एवमेतेन विद्यां त्रिपुरेशीं स्पष्टीकृत्वा जातवेदस इत्यादिना जातो देव एक ईश्वरः परमो ज्योतिर्मन्त्रतो वेति तुरीयं वरं दत्त्वा बिन्दुपूर्णज्योतिःस्थानं कृत्वा प्रथमस्याद्यं द्वितीयं च तृतीयं च सर्वरक्षाकरीसम्बन्धं कृत्वा विद्यामात्मासनरूपिणीं स्पष्टीकृत्वा जातवेदसे सुनवाम सोममित्यादि पठित्वा रक्षाकरीं विद्यां स्मृत्वाऽऽद्यन्तयोर्धाम्नोः शक्तिशिवरूपिणीं विनियोज्य स इति शक्त्यात्मकं वर्णं सोममिति शैवात्मकं धाम जानीयात्।यो जानीते स सुभगो भवति।

त्रिपुरवासिनीविद्या

इत्येवमेतां चक्रासनगतां त्रिपुरवासिनीं विद्यां स्पष्टीकृत्वा जातवेदसे सुनवाम सोममिति पठित्वा त्रिपुरेश्वरीविद्यां सदोदितां शिवशक्त्यात्मिकामावेदितां जातवेदाः शिव इति सेति शक्त्यात्माक्षरमिति शिवादिशक्त्यन्तरालभूतां त्रिकूटादिचारिणीं सूर्याचन्द्रमस्कां मन्त्रासनगतां त्रिपुरां महालक्ष्मीं सदोदितां स्पष्टीकृत्वा जातवेदसे सुनवाम सोममित्यादि पठित्वा पूर्वां सदात्मासनरूपां विद्यां स्मृत्वा देव इत्यादिना विश्वाहसन्ततो-दयाबैन्दवमुपरि विन्यस्य सिद्धासनस्थां त्रिपुरां मालिनीं विद्यां स्पष्टीकृत्वा जातवेदसे सुनवाम सोममित्यादि पठित्वा त्रिपुरां सुन्दरीं श्रित्वा कले अक्षरे विचिन्त्य मूर्तिभूतां मूर्तिरूपिणीं

सर्वविद्येश्वरीं त्रिपुरां विद्यां स्पष्टीकृत्वा जातवेदसे इत्यादि पठित्वा त्रिपुरां लक्ष्मीं श्रित्वाऽग्निं निदहाति।

### त्रिपुराम्बविद्या

सैवेयमग्न्यानने ज्वलतीति विचिन्त्य त्रिज्योतिषमीश्वरीं त्रिपुरामम्बां विद्यां स्पष्टीकुर्यात्॥

एवमेतेन स नः पर्षदति दुर्गाणि विश्वेत्यादिपरप्रकाशिनी प्रत्यग्भूता कार्या विद्येयमाह्वानकर्मणि सर्वतोधीरेति व्याचक्षते।

एवमेतद्विद्याऽष्टकं महामायादेव्यङ्गभूतं व्याचक्षते।

### श्रीचक्रस्यानुलोमक्रमः

देवा ह वै भगवन्तमब्रुवन् महाचक्रनायकं नो ब्रूहीति सार्वकामिकं सर्वाराध्यं सर्वरूपं विश्वतोमुखं मोक्षद्वारं यद्योगिन उपविश्य परं ब्रह्म भित्त्वा निर्वाणमुपविशन्ति। तान् होवाच भगवान् श्रीचक्रं व्याख्यास्याम इति। त्रिकोणं त्र्यश्रं कृत्वा तदन्तर्मध्यवर्तिमानयष्टिरेखामाकृष्य विशालं नीत्वाऽग्रतो योनिं कृत्वा पूर्वयोन्यग्ररूपिणीं मानयष्टिं कृत्वा तां सर्वोर्ध्वां नीत्वा योनिं कृत्वाऽऽद्यं त्रिकोणं चक्रं भवति द्वितीयमन्तरालं भवति तृतीयमष्टयोन्यङ्कितं भवति। अथाष्टारचक्राद्यन्तविदिक्कोणाग्रतो रेखां नीत्वा साध्याद्याकर्षणबद्धरेखां नीत्वेत्येवमथोर्ध्व-संपुटयोन्यङ्कितं कृत्वा कक्षाम्य ऊर्ध्वगरेखाचतुष्टयं कृत्वा यथाक्रमेण मानयष्टिद्वयेन दशयोन्यङ्कितं चक्रं भवति। अनेनैव प्रकारेण पुनर्दशारचक्रं भवति। मध्यत्रिकोणाग्रचतुष्टयाद्रेखा-चतुष्टयाग्रकोणेषु संयोज्य तद्दशारांशतो नीतां मानयष्टिरेखां योजयित्वा चतुर्दशारं चक्रं भवति। ततोऽष्टपत्रसंवृतं चक्रं भवति षोडशपत्रसंवृतं चक्रं भवति पार्थिवं चक्रं चतुर्द्वारं भवति। एवं सृष्टियोगेन चक्रं व्याख्यातम्।

श्रीचक्रस्य प्रतिलोमक्रमः

नवात्मकं चक्रं प्रातिलोम्येन वा वच्मि—प्रथमं चक्रं त्रैलोक्यमोहनं भवति साणिमाद्यष्टकं भवति समात्रष्टकं भवति ससर्वसंक्षोभिण्यादिदशकं भवति सप्रकटं भवति त्रिपुरयाऽधिष्ठितं भवति ससर्वसंक्षोभिणीमुद्रया जुष्टं भवति । द्वितीयं सर्वाशापरिपूरकं भवति सकामाद्याकर्षिणीषोडशकं भवति सगुप्तं भवति त्रिपुरेश्वर्याऽधिष्ठितं भवति सर्वविद्राविणीमुद्रया जुष्टं भवति। तृतीयं सर्वसंक्षोभणं चक्रं भवति सानङ्गकुसुमाद्यष्टकं भवति सगुप्ततरं भवति त्रिपुरसुन्दर्याऽधिष्ठितं भवति सर्वाकर्षिणीमुद्रया जुष्टं भवति। तुरीयं सर्वसौभाग्यदायकं चक्रं भवति ससर्वसंक्षोभिण्यादिद्विसप्तकं भवति ससंप्रदायं भवति त्रिपुरवासिन्याऽधिष्ठितं भवति ससर्ववशंकरीमुद्रया जुष्टं भवति। पञ्चमं तुरीयान्तं सर्वार्थसाधकं चक्रं भवति ससर्वसिद्धि-प्रदादिदशकं भवति सकलकौलं भवति त्रिपुरामहालक्ष्म्याऽधिष्ठितं भवति महोन्मादिनी मुद्रयाजुष्टं भवति । षष्ठं सर्वरक्षाकरं चक्रं ससर्वज्ञत्वादिदशकं भवति सनिगर्भं भवति, त्रिपुरमालिन्यऽधिष्ठितं भवति। महाङ्कुशमुद्रया जुष्टं भवति। सप्तमं सर्वरोगहरं चक्रं भवति सवशिन्याद्यष्टकं भवति सरहस्यं भवति त्रिपुरसिद्धयाऽधिष्ठितं भवति खेचरीमुद्रया जुष्टं भवति । अष्टमं सर्वसिद्धिप्रदं चक्रं भवति सायुधचतुष्टयं भवति सपरापररहस्यं भवति त्रिपुराम्बयाऽधिष्ठितं भवति बीजमुद्रया जुष्टं भवति। नवमं चक्रनायकं सर्वानन्दमयं चक्रं भवति सकामेश्वर्यादित्रिकं भवति सातिरहस्यं भवति महात्रिपुरसुन्दर्याऽधिष्ठितं भवति योनिमुद्रया जुष्टं भवति। संक्रामन्ति वै सर्वाणि छन्दांसि चक्राराणि तदेव चक्रं श्रीचक्रम्।

श्रीचक्रे महात्रिपुरसुन्दरीपूजा

तस्य नाभ्यामग्निमण्डले सूर्याचन्द्रमसौ तत्रोंकारपीठं पूजयित्वा तत्राक्षरं बिन्दुरूपं तदन्तर्गतव्योमरूपिणीं विद्यां परमां स्मृत्वा महात्रिपुरसुन्दरीमावाह्य

क्षीरेण स्नापिते देवि चन्दनेन विलेपिते।
बिल्वपत्रार्चिते देवि दुर्गेऽहं शरणं गतः ॥

इत्येकयर्चा प्रार्थ्य मायालक्ष्मीमन्त्रेण पूजयेदिति भगवानब्रवीत्॥

एतैर्मन्त्रैर्भगवतीं यजेत् । ततो देवी प्रीता भवति स्वात्मानं दर्शयति। तस्माद्य एतैर्मन्त्रैर्यजति स ब्रह्म पश्यति स सर्वं पश्यति सोऽमृतत्वं च गच्छति। य एवं वेदेति महोपनिषत्।

—*—

# तृतीयोपनिषत्

मुद्राः

देवा ह वै मुद्राः सृजेयमिति भगवन्तमब्रुवन्। तान् होवाच भगवानवनिकृतजानुमण्डलं विस्तीर्य पद्मासनं कृत्वा मुद्राः सृजेतेति।

बिन्दुत्रिकोणवसुकोणदशारयुग्मं
मन्वश्रनागदलसंयुतषोडशारम्।
वृत्तत्रयं च धरणीसदनत्रयं च
श्रीचक्रमेतदुदितं परदेवतायाः।

स सर्वानाकर्षयति यो योनिमुद्रामधीते स सर्वं वेत्ति स सर्वफलमश्नुते स सर्वान् भञ्जयति स विद्वेषिणं स्तम्भयति।

मध्यमे अनामिकोपरि विन्यस्य कनिष्ठिकाङ्गुष्ठतोऽधीते मुक्तयोस्तर्जन्यो-र्दण्डवदधस्तादेवंविधा प्रथमां संपद्यते । सैव मिलितमध्यमा द्वितीया। तृतीयाऽङ्कुशाकृतिरिति। प्रातिलोम्येन पाणी सङ्घर्षयित्वाऽङ्गुष्ठौ साग्रिमौ समाधाय तुरीया। परस्परं कनीयसेदं मध्यमाबद्धे अनामिके दण्डिन्यौ तर्जन्या वालिङ्ग्यावष्टभ्य मध्यमानखमिलिताङ्गुष्ठौ पञ्चमी । सैवाग्रेऽङ्कुशाकृतिः षष्ठी। दक्षिणशये वामबाहुं कृत्वाऽन्योन्या-नामिके कनीयसीमध्यगते मध्यमे तर्जन्याक्रान्ते सरलास्वङ्गुष्ठौ खेचरी सप्तमी । सर्वोर्ध्वे सर्वसंहृति स्वमध्यमानामिकाऽन्तरे कनीयसे पार्श्वयोस्तर्जन्यावङ्कुशाढ्ये युक्ता साङ्गुष्ठयोगतोऽन्योन्यं सममञ्जलिं कृत्वाऽष्टमी।

परस्परमध्यमापृष्ठवर्तिन्यावनामिके तर्जन्याक्रान्ते समे मध्यमे आदायाङ्गुष्ठौ मध्यवर्तिनौ नवमी प्रतिपद्यत इति।

पञ्चबाणमुद्रा

सैवेयं कनीयसे समे अन्तरितेऽङ्गुष्ठौ समावन्तरितौ कृत्वा त्रिखण्डापद्यत इति। पञ्च बाणाः पञ्चाद्या मुद्राः स्पष्टाः।

नवबीजोद्धारः

क्रोमङ्कुशा हसखफ्रें खेचरी हस्रौं बीजाष्टमी वाग्भवाद्या नवमी दशमी च संपद्यत इति य एवं वेद।

कामकलाचक्रम्

अथातः कामकलाभूतं चक्रं व्याख्यास्यामो ह्रीं क्लीमैं ब्लूँ स्रौमेते पञ्च कामाः सर्वचक्रं व्याप्य वर्तन्ते । मध्यमं कामं सर्वावसाने संपुटीकृत्य ब्लूङ्कारेण संपुटं व्याप्तं कृत्वा द्रिंद्वयेन मध्यवर्तिना साध्यं बद्ध्वा भूर्जपत्रे यजति। तच्चक्रं यो वेत्ति स सर्वं

वेत्ति स सकलान् लोकानाकर्षयति स सर्वं स्तम्भयति। नीलीयुक्तं चक्रं शत्रून् मारयति गतिं स्तम्भयति। लाक्षायुक्तं कृत्वा सकललोकं वशीकरोति। नवलक्षजपं कृत्वा रुद्रत्वं प्राप्नोति। मातृकया वेष्टितं कृत्वा विजयी भवति। भगाङ्कुण्डं कृत्वाऽग्निमाधाय हविषा योषितो वशीकरोति। पुरुषे हुत्वा वर्तुले वा हुत्वा श्रियमतुलां प्राप्नोति। चतुरश्रे हुत्वा वृष्टिर्भवति। त्रिकोणे हुत्वा शत्रून् मारयति गतिं स्तम्भयति। पुष्पाणि हुत्वा विजयी भवति। महारसैर्हुत्वा परमानन्दनिर्भरो भवति। महारसाः षड्रसाः।

### क्षेत्रशपूजा

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम्। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम्॥

इत्येवमाद्यमक्षरं तदन्त्यबिन्दुपूर्णमित्यनेनानङ्गं स्पृशति। गं गणेशाय नम इति गणेशं नमस्कुर्वीत। ओं नमो भगवते भस्माङ्गरागायोग्रतेजसे हनहन दह दह पचपच मथमथ विध्वंसय विध्वंसय हलभञ्जन शूलमूले व्यञ्जनसिद्धिं कुरुकुरु समुद्रं पूर्वप्रतिष्ठितं शोषय शोषय स्तम्भय स्तम्भय परमन्त्रपरयन्त्रपर-तन्त्रपरदूतपरकटकपरच्छेदनकर विदारय विदारय च्छिन्धिच्छिन्धि ह्रीं फट् स्वाहा। अनेन क्षेत्राध्यक्षं पूजयेदिति।

### कुलकुमारीपूजा

कुलकुमारि विद्महे मन्त्रकोटि सुधीमहि। तन्नः कौलिः प्रचोदयात्। इति कुमार्यर्चनं कृत्वा यो वै साधकोऽभिलिखति सोऽमृतत्वं गच्छति स यश आप्नोति स परमायुष्यमथ वा परं ब्रह्म भित्त्वा तिष्ठति य एवं वेदेति महोपनिषत्।

—★—

## चतुर्थोपनिषत्

### मृत्युञ्जयोपदेशः

देवा ह वै भगवन्तमब्रुवन् देव गायत्रं हृदयं नो व्याख्यातं त्रैपुरं सर्वोत्तमम्।

जातवेदससूक्तेनाख्यातं नस्त्रैपुराष्टकम्।
यदिष्ट्वा मुच्यते योगी जन्मसंसारबन्धनात्॥

अथ मृत्युञ्जयं नो ब्रूहीत्येवं ब्रुवतां सर्वेषां देवानां श्रुत्वेदं वाक्यमथातस्त्र्यम्बकेनानुष्टुभेन मृत्युञ्जयं दर्शयति॥

### त्र्यम्बकादिशब्दार्थविवरणम्

कस्मात् त्र्यम्बकमिति। त्रयाणां पुराणामम्बकं स्वामिनं तस्मादुच्यते त्र्यम्बकमिति। अथ कस्मादुच्यते यजामह इति। यजामहे सेवामहे वस्तु महेत्यक्षरद्वयेन कूटत्वेनाक्षरैकेन मृत्युञ्जयमित्युच्यते तस्मादुच्यते यजामह इति। अथ कस्मादुच्यते सुगन्धिमिति। सर्वतो यश आप्नोति तस्मादुच्यते सुगन्धिमिति। अथ कस्मादुच्यते पुष्टिवर्धनमिति। यः सर्वान् लोकान् सृजति यःसर्वान् लोकांस्तारयति यः सर्वान् लोकान् व्याप्नोति तस्मादुच्यते पुष्टिवर्धनमिति। अथ कस्मादुच्यते उर्वारुकमिव बन्धनान्मृत्यो र्मुक्षीयेति। संलग्नत्वादुर्वारुकमिव मृत्योः संसारबन्धनात् संलग्नत्वाद्बद्धत्वान्मोक्षीभवति मुक्तो भवति। अथ कस्मादुच्यते मामृतादिति। अमृतत्वं प्राप्नोत्यक्षरं प्राप्नोति स्वयं रुद्रो भवति।

### भगवतीदर्शनसाधनमन्त्रः

देवा ह वै भगवन्तमूचुः — सर्वं नो व्याख्यातम्। अथ कैर्मन्त्रैः स्तुता भगवती स्वात्मानं दर्शयति तान् सर्वान् शैवान्

वैष्णवान् सौरान् गाणेशान् नो ब्रूहीति। स होवाच भगवान्—

त्र्यम्बकेनानुष्टुभेन मृत्युञ्जयमुपासयेत्।
पूर्वेणाध्वना व्याप्तमेकाक्षरमिति स्मृतम्॥

ओं नमः शिवायेति याजुषमन्त्रोपासको रुद्रत्वं प्राप्नोति कल्याणं प्राप्नोति य एवं वेद। तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्। विष्णोः सर्वतोमुखस्य स्नेहो यथा पललपिण्डमोतप्रोतमनुव्याप्तं व्यतिरिक्तं व्यापुत इति व्याप्नुवतो विष्णोस्तत्परमं पदं परं व्योमेति परमं पदं पश्यन्ति वीक्षन्ते सूरयो ब्रह्मादयो देवास इति सदा हृदय आदधते। तस्माद्विष्णोः स्वरूपं वसति तिष्ठति भूतेष्विति वासुदेव इति। ओं नम इति त्रीण्यक्षराणि। भगवत इति चत्वारि। वासुदेवायेति पञ्चाक्षराणि। एतद्वै वासुदेवस्य द्वादशार्णमभ्येति। सोपप्लवं तरति स सर्वमायुरेवैति विन्दते प्राजापत्यं रायस्पोषं गौपत्यं च समश्नुते। प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपमकार उकारो मकार इति। तानेकधा संभवति तदोमिति।

हंसः शुचिषद्वसुरन्तरिसद्धोता वेदिषदतिथिर्दुरोणसत्।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥

इति हंसः इत्येतन्मनोरक्षरद्वितीयेन प्रभापुञ्जेन सौरेण धृतमब्जा गोजा ऋतजा अद्रिजा ऋतं सत्याप्रभापुञ्जिन्युषा-संध्याप्रज्ञाभिः शक्तिभिः पूर्वं सौरमधीयानः सर्वफलमश्नुते। स व्योम्नि परमे धामनि सौरे निवसते। गणानां त्वेति त्रैष्टुभेन पूर्वेणाध्वना मनुनैकार्णेन गणाधिपमभ्यर्च्य गणेशत्वं प्राप्नोति। अथ गायत्री सावित्री सरस्वत्यजपा मातृका प्रोक्ता तया सर्वमिदं व्याप्तमिति।

ऐं वागीश्वरि विद्महे क्लीं कामेश्वरि धीमहि। सौस्तन्नः शक्तिः प्रचोदयादिति गायत्री प्रातः सावित्री मध्यन्दिने सरस्वती सायमिति निरन्तरमजपा हंस इत्येव मातृका पञ्चाशद्वर्णविग्रहेणाकारादिक्षकारान्तेन व्याप्तानि भुवनानि शास्त्राणि च्छन्दांसीत्येवं भगवती सर्वं व्याप्नोतीत्येव तस्यै वै नमो नम इति। तान् भगवानब्रवीदेतैर्मन्त्रैर्नित्यं देवीं स्तौति स सर्वं पश्यति सोऽमृतत्वं च गच्छति य एवं वेदेत्युपनिषत्।

—*—

# पञ्चमोपनिषत्

### निर्विशेषब्रह्म

देवा ह वै भगवन्तमब्रुवन् स्वामिन्नः कथितं स्फुटं क्रियाकाण्डं सविषयं त्रैपुरमिति। अथ परमं निर्विशेषं कथयस्वेति। तान् होवाच भगवान् तुरीयया माययाऽन्त्यया निर्दिष्टं परमं ब्रह्मेति परमपुरुषं चिद्रूपं परमात्मेति। श्रोता मन्ता द्रष्टाऽऽदेष्टा स्प्रष्टाऽऽघोष्टा विज्ञाता प्रज्ञाता सर्वेषां पुरुषाणामन्तःपुरुषः स आत्मा स विज्ञेय इति। न तत्र लोकालोका न तत्र देवादेवाः पशवोऽपशवस्तापसो न तापसः पौल्कसो न पौल्कसो विप्रा न विप्राः। स इत्येकमेव परं ब्रह्म विभ्राजति निर्वाणम्। न तत्र देवा ऋषयः पितर ईशते। प्रतिबुद्धः सर्वविद्ये(दे)ति।

तत्रैते श्लोका भवन्ति—

अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा।
यतो निर्विषयो नाम मनसो मुक्तिरिष्यते॥

मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च।
अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम्॥

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धनं विषयासक्तिर्मुक्त्यै निर्विषयं मनः ॥

निरस्तविषयासङ्गं संनिरुद्धं मनो हृदि ।
यदा यात्यमनीभावस्तदा तत्परमं पदम् ॥

तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम् ।
एतज्ज्ञानं च ध्यानं च शेषोऽन्यो ग्रन्थविस्तरः ॥

नैव चिन्त्यं न चाचिन्त्यं न चिन्त्यं चिन्त्यमेव च ।
पक्षपातविनिर्मुक्तं ब्रह्म संपद्यते ध्रुवम् ॥

स्वरेण सल्लपेद्योगी स्वरं संभावयेत् परम् ।
अस्वरेण तु भावेन न भावो भाव इष्यते ॥

तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।
तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते क्रमात् ॥

निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् ।
अप्रमेयमनाद्यं च यज्ज्ञात्वा मुच्यते बुधः ॥

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥

निरुपाधिकात्मदर्शनम्

एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥

घटसंवृतमाकाशं नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तथा जीवो नभोपमः ॥

घटवद्विविधाकारं भिद्यमानं पुनः पुनः ।
तद्भेदे च न जानाति स जानाति च नित्यशः ।।

शब्दमायावृतो यावत्तावत्तिष्ठति पुष्कले ।
भिन्ने तमसि चैकत्वमेक एवानुपश्यति ।।

शब्दार्णमपरं ब्रह्म तस्मिन् क्षीणे यदक्षरम् ।
तद्विद्वानक्षरं ध्यायेद्यदीच्छेच्छान्तिमात्मनः ।।

द्वे ब्रह्मणी हि मन्तव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।।

ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ।
पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ।।

गवामनेकवर्णानां क्षीरस्याप्येकवर्णता ।
क्षीरवत् पश्यति ज्ञानं लिङ्गिनस्तु गवां यथा ।।

ज्ञाननेत्रं समाधाय स महत् परमं पदम् ।
निष्कलं निश्चलं शान्तं ब्रह्माहमिति संस्मरेत् ।।

इत्येकं परब्रह्मरूपं सर्वभूताधिवासं तुरीयं जानीते सोऽक्षरे परमे व्योमन्यधिवसति । य एतां विद्यां तुरीयां ब्रह्मयोनिस्वरूपां तामिहायुषे शरणमहं प्रपद्ये ।।

श्रीकामराजविद्यामहिमा

आकाशाद्यनुक्रमेण सर्वेषां वा एतद्भूतानामाकाशः परायणं सर्वाणि ह वा इमानि भूतान्याकाशादेव जायन्त आकाश एव लीयन्ते तस्मादेव जातानि जीवन्ति तस्मादाकाशं बीजं विद्यात् । तदेवाकाशपीठं स्पार्शनं पीठं तेजःपीठममृतपीठं रत्नपीठं जानीयात् । यो जानीते सोऽमृतत्वं च गच्छति । तस्मादेतां तुरीयां

श्रीकामराजीयामेकादशधा भिन्नामेकाक्षरं ब्रह्मेति यो जानीते स तुरीयं पदं प्राप्नोति य एवं वेदेति महोपनिषत्।

—★—

# देव्युपनिषत्

(अथर्ववेदीया)

भद्रं कर्णेभिः - इति शान्तिः

चिच्छक्तेः सर्वात्मरूपेण ब्रह्मत्वम्

सर्वे वै देवा देवीमुपतस्थुः काऽसि त्वं महादेवि ॥

साऽब्रवीदहं ब्रह्मस्वरूपिणी । मत्तः प्रकृतिपुरुषात्मकं जगच्छून्यं चाशून्यं च । अहमानन्दानान्दाः । विज्ञाना विज्ञानेऽहम्। ब्रह्माब्रह्मणी वेदितव्ये। इत्याहाथर्वणी श्रुतिः। अहं पञ्चभूतान्यपञ्चभूतानि। अहमखिलं जगत्। वेदोऽहमवेदोऽहम्। विद्याऽहमविद्याऽहम्। अजाऽहमनजाऽहम्। अधश्चोर्ध्वं च तिर्यक् चाहम्।

चिच्छक्तेः सर्वधारकत्वम्

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः । अहं मित्रावरुणावुभा बिभर्म्यहमिन्द्राग्नी अहमश्विनावुभौ। अहं सोमं त्वष्टारं पूषणं भगं दधाम्यहम्। विष्णुमुरुक्रमं ब्रह्माणमुत प्रजापतिं दधामि। अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते। अहं राष्ट्री सङ्गमनी वसूनामहं सुवे पितरमस्य मूर्धन् । मम योनिरप्स्वन्तःसमुद्रे य एवं वेद स देवीपदमाप्नोति।

देवकृतदेवीस्तुतिः

ते देवा अब्रुवन्—

नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ।।

तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणमहं प्रपद्ये सुतरां नाशय ते तमः ।।

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ।।

कालरात्रिं ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम् ।
सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम् ।।

महालक्ष्मीश्च विद्महे सर्वसिद्धिश्च धीमहि । तन्नो देवी प्रचोदयात् । अदितिरिह जनिष्ट दक्षया दुहिता तव । तां देवा अन्वजायन्त भद्रा अमृतबन्धवः ।

आदिविद्योद्धारः

कामो योनिः कामकला वज्रपाणिर्गुहा हसा मातरिश्वाऽभ्रमिन्द्रः ।
पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमाताऽऽदिविद्योम् ।।

(क ए ई ल ह्रीं हसकहलह्रीं सकलह्रीं)

एषाऽऽत्मशक्तिः । एषा विश्वमोहिनी पाशाङ्कुश-धनुर्बाणधरा । एषा श्रीमहाविद्या । य एवं वेद स शोकं तरति । नमस्ते अस्तु भगवति भवति मातरस्मान्पातु सर्वतः । सैषाऽष्टौ वसवः । सैषैकादशरुद्राः । सैषा द्वादशादित्याः । सैषा विश्वेदेवाः सोमपा असोमपाश्च । सैषा यातुधाना असुरा रक्षांसि पिशाचा यक्षाः सिद्धाः । सैषा सत्त्वरजस्तमांसि । सैषा प्रजापतीन्द्रमनवः ।

सैषा ग्रहनक्षत्रज्योतींषि कलाकाष्ठाऽऽदिकालरूपिणी । तामहं प्रणौमि नित्यम्॥

तापापहारिणीं देवीं भुक्तिमुक्तिप्रदायिनीम्।
अनन्तां विजयां शुद्धां शरण्यां शिवदां शिवाम्॥

भुवनेश्येकाक्षरीमन्त्रः

वियदीकारसंयुक्तं वीतिहोत्रसमन्वितम्।
अर्धेन्दुलसितं देव्या बीजं सर्वार्थसाधकम्॥

एवमेकाक्षरं मन्त्रं यतयः शुद्धचेतसः ।
ध्यायन्ति परमानन्दमया ज्ञानाम्बुराशयः ।

वाङ्माया ब्रह्मभूस्तस्मात् षष्ठं वक्त्रसमन्वितम्।
सूर्यो वामश्रोत्रबिन्दुः संयुताष्टतृतीयकम्॥

नारायणेन संयुक्तो वायुश्चाधरसंयुतः ।
विच्चे नवार्णकोऽर्णः स्यान्महदानन्ददायकः ॥

(ऐं ह्रीं क्लीं चामुण्डायै विच्चे)

हृत्पुण्डरीकमध्यस्थां प्रातःसूर्यसमप्रभाम्।

पाशाङ्कुशधरां सौम्यां वरदाभयहस्तकाम्।
त्रिनेत्रां रक्तवसनां भक्तकामदुघां भजे।

नमामि त्वामहं देवीं महाभयविनाशिनीम्।
महादुर्गप्रशमनीं महाकारुण्यरूपिणीम्॥

यस्याः स्वरूपं ब्रह्मादयो न जानन्ति तस्मादुच्यतेऽज्ञेया। यस्या अन्तो न विद्यते तस्मादुच्यतेऽनन्ता । यस्या ग्रहणं नोपलभ्यते तस्मादुच्यतेऽलक्ष्या । यस्या जननं नोपलभ्यते

तस्मादुच्यतेऽजा । एकैव सर्वत्र वर्तते तस्मादुच्यत एका । एकैव विश्वरूपिणी तस्मादुच्यते नैका । अत एवोच्यतेऽज्ञेयाऽनन्ताऽलक्ष्याऽजैका नैका ॥

मन्त्राणां मातृका देवी शब्दानां ज्ञानरूपिणी ।
ज्ञानानां चिन्मयातीता शून्यानां शून्यसाक्षिणी ॥

यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्तिता ।
तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम् ।
नमामि भवभीतोऽहं संसारार्णवतारिणीम् ॥

विद्याजपस्तुतिः

इदमथर्वणशीर्षं योऽधीते स पञ्चाथर्वशीर्षजपफलमवाप्नोति । इदमथर्वणशीर्षं ज्ञात्वा योऽर्चां स्थापयति ।

शतलक्षं प्रजप्त्वाऽपि नार्चासिद्धिं च विन्दति ।
शतमष्टोत्तरं चास्याः पुरश्चर्याविधिः स्मृतः ॥

दशवारं पठेद्यस्तु सद्यः पापैः प्रमुच्यते ।
महादुर्गाणि तरति महादेव्याः प्रसादतः ॥

प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । तत् सायं प्रातः प्रयुञ्जानः पापोऽपापो भवति । निशीथे तुरीयसन्ध्यायां जप्त्वा वाक्सिद्धिर्भवति । नूतनप्रतिमायां जप्त्वा देवतासांनिध्यं भवति । प्राणप्रतिष्ठायां जप्त्वा प्राणानां प्रतिष्ठा भवति । भौमाश्विन्यां महादेवीसंनिधौ जप्त्वा महामृत्युं तरति य एवं वेदेत्युपनिषत् ।

—*—

# बह्वृचोपनिषत्

## (ऋग्वेदीया)

वाङ्मे मनसि—इति शान्तिः

### चिच्छक्तिस्वरूपम्

ओं देवी ह्येकाऽग्र आसीत् । सैव जगदण्डमसृजत । कामकलेति विज्ञायते। शृङ्गारकलेति विज्ञायते।

तस्या एव ब्रह्माऽजीजनत् । विष्णुरजीजनत् । रुद्रोऽजीजनत्। सर्वे मरुद्गणा अजीजनन् । गन्धर्वाप्सरसः किंनरा वादित्रवादिनः समन्तादजीजनम् । भोग्यमजीजनत् । सर्वमजीजनत् । सर्वं शाक्तमजीजनत् । अण्डजं स्वेदजमुद्भिज्जं जरायुजं यत्किंचैतत् प्राणिस्थावरजङ्गमं मनुष्यमजीजनत् । सैषा परा शक्तिः । सैषा शाम्भवी विद्या कादिविद्येति वा हादिविद्येति वा सादिविद्येति वा रहस्यमोमों वाचि प्रतिष्ठा । सैव पुरत्रयं शरीरत्रयं व्याप्य बहिरन्तरवभासयन्ती देशकालवस्त्वन्तरासङ्गान्महा-त्रिपुरसुन्दरी वै प्रत्यक् चितिः ॥

सैवात्मा ततोऽन्यदसत्यमनात्मा । अत एषा ब्रह्मसंवित्ति-र्भावाभावकलाविनिर्मुक्ता चिद्विद्याऽद्वितीयाब्रह्मसंवित्तिः सच्चिदानन्दलहरी महात्रिपुरसुन्दरी बहिरन्तरनुप्रविश्य स्वयमेकैव विभाति । यदस्ति सन्मात्रम् । यद्भाति चिन्मात्रम् । यत् प्रियमानन्दम् । तदेतत् सर्वाकारा महात्रिपुरसुन्दरी । त्वं चाहं च सर्वं विश्वं सर्वदेवता । इतरत् सर्वं महात्रिपुरसुन्दरी । सत्यमेकं ललिताऽऽख्यं वस्तु तदद्वितीयमखण्डार्थं परं ब्रह्म ॥

पञ्चरूपपरित्यागादस्वरूपप्रहाणतः ।
अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते महत् ॥

प्रज्ञानं ब्रह्मेति वा अहं ब्रह्मास्मीति वा भाष्यते । तत्त्वमसीत्येव संभाष्यते । अयमात्मा ब्रह्मेति वा अहं ब्रह्मास्मीति वा ब्रह्मैवाहमस्मीति वा ।

अम्बिकाऽऽदिरूपेण विच्छक्तिभावना

योऽहमस्मीति वा सोऽहमस्मीति वा योऽसौ सोऽहमस्मीति वा या भाव्यते सैषा षोडशी श्रीविद्या पञ्चदशाक्षरी श्रीमहात्रिपुरसुन्दरी बालाऽम्बिकेति बगलेति वा मातङ्गीति स्वयंवरकल्याणीति भुवनेश्वरीति चामुण्डेति चण्डेति वाराहीति तिरस्करिणीति राजमातङ्गीति वा शुकश्यामलेति वा लघुश्यामलेति वा अश्वारूढेति वा प्रत्यङ्गिरा धूमावती सावित्री सरस्वती गायत्री ब्रह्मानन्दकलेति ।। ८

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ।।
इत्युपनिषत् ।

—*—

# भावनोपनिषत्

अथर्ववेदीया

भद्रं कर्णेभिः - इति शान्तिः

शिवस्य शक्तियोगादीश्वरत्वम्

श्रीगुरुः परमकारणभूता शक्तिः । केन? नवरन्ध्ररूपो देहो नवशक्तिमयं श्रीचक्रम् । वाराही पितृरूपा कुरुकुल्लाबली देवता माता । पुरुषार्थाः सागराः । देहो नवरत्नद्वीपः । आधारनवक-मुद्राः शक्तयः । त्वगादिसप्तधातुभिरनेकैः संयुक्ताः सङ्कल्पाः

कल्पतरवः । तेजःकल्पकोद्यानम् । रसनया भाव्यमाना मधुराम्लतिक्तकटुकषायलवणरसाः षड्तवः । क्रियाशक्तिः पीठम् । कुण्डलिनी ज्ञानशक्तिर्गृहम् । इच्छाशक्ति-र्महात्रिपुरसुन्दरी । ज्ञाता होता । ज्ञानमर्घ्यम् । ज्ञेयं हविः । ज्ञातृज्ञानज्ञेयानामभेदभावनं श्रीचक्रपूजनम् । नियतिसहित-शृङ्गारादयो नव रसा अणिमादयः । कामक्रोधलोभ-मोहमदमात्सर्यपुण्यपापमया ब्राह्मयाद्यष्टशक्तयः । पृथि-व्यापस्तेजोवाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपाद-पायूपस्थविकाराः षोडश शक्तयः । वचनादानगमन-विसर्गानन्दहानोपादानोपेक्षाबुद्धयोऽनङ्गकुसुमादिशक्तयोऽष्टौ । अलम्बुसा कुहूर्विश्वोदरी वरुणा हस्तिजिह्वा यशस्वत्यश्विनी गान्धारी पूषा शङ्खिनी सरस्वतीडा पिङ्गला सुषुम्ना चेति चतुर्दश नाड्यः सर्वसंक्षोभिण्यादिचतुर्दशारदेवताः । प्राणापान-व्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जया दश वायवः सर्वसिद्धिप्रदाऽऽदिबहिर्दशारदेवताः । एतद्वायुदशसंसर्गोपाधि-भेदेन रेचकपूरकशोषकदाहकप्लावका अमृतमिति प्राणमुख्यत्वेन पञ्चविधोऽस्ति । मनुष्याणां मोहको देहको भक्ष्यभोज्य-लेह्यचोष्यपेयात्मकं चतुर्विधमन्नं पाचयति । एता दश धनकलाः सर्वज्ञत्वाद्यन्तर्दशारदेवताः । शीतोष्णसुखदुःखेच्छासत्व-रजस्तमोगुणा वशिन्यादिशक्तयोऽष्टौ । शब्दस्पर्श-रूपरसगन्धाः पञ्चतन्मात्राः पञ्चपुष्पबाणा मन इक्षुधनुः । वश्यो बाणो रागः पाशो द्वेषोऽङ्कुशः । अव्यक्तमहत्तत्वाहङ्कारकामेश्वरीवज्रेश्वरी-भगमालिन्योऽन्तस्त्रिकोणाग्रगा देवताः । पञ्चदशतिथिरूपेण कालस्य परिणामावलोकनं पञ्चदशनित्या श्रद्धाऽनुरूपाधिदेवता। तयोः कामेश्वरी सदानन्दघना पूर्णा स्वात्मैक्यरूपा देवता ॥ २

उपचाराः

सलिलं सौहित्यकारणं सत्त्वं कर्तव्यमकर्तव्यमिति भावनायुक्त उपचारः । अस्ति नास्तीति कर्तव्यता उपचारः । बाह्याभ्यन्तः करणानां रूपग्रहणयोग्यताऽस्त्वित्यावाहनम् । तस्य बाह्याभ्यन्तःकरणानामेकरूपविषयग्रहणमासनम् । रक्तशुक्लपदैकीकरणं पाद्यम् । उज्ज्वलदामोदानन्दासनं दानमर्घ्यम्। स्वच्छं स्वतःसिद्धमित्याचमनीयम् । चिच्चन्द्रमयीसर्वाङ्गस्रवणं स्नानम् । चिदग्निस्वरूपपरमानन्दशक्तिस्फुरणं वस्त्रम्। प्रत्येकं सप्तविंशतिधा भिन्नत्वेनेच्छाज्ञानक्रियाऽऽत्मकब्रह्मग्रन्थिमद्रसतन्तुब्रह्मनाडी ब्रह्मसूत्रम् । स्वव्यतिरिक्तवस्तुसङ्गरहितस्मरणं विभूषणम् । स्वच्छस्वपरिपूरणानुस्मरणं गन्धः । समस्त-विषयाणां मनसः स्थैर्येणानुसन्धानं कुसुमम्। तेषामेव सर्वदा स्वीकरणं धूपः । पवनावच्छिन्नोर्ध्वज्वलनसच्चिदुल्काऽऽकाशदेहो दीपः । समस्तयातायातवर्ज्यं नैवेद्यम्। अवस्थात्रयैकीकरणं ताम्बूलम् । मूलाधारादाब्रह्मरन्ध्रपर्यन्तं ब्रह्मरन्ध्रादामूलाधारपर्यन्तं गतागतरूपेण प्रादक्षिण्यम् । तुर्यावस्था नमस्कारः । देहशून्यप्रमातृतानिमज्जनं बलिहरणम्। सत्वमस्तिकर्तव्यम-कर्तव्यमौदासीन्यनित्यात्मविलापन होमः । स्वयं तत्पादुकानिमज्जनं परिपूर्णध्यानम्।

भावनाफलम्

एवं मुहूर्तत्रयं भावनापरो जीवन्मुक्तो भवति । तस्य देवताऽऽत्मैक्यसिद्धिः। चिन्तितकार्याण्ययत्नेन सिध्यन्ति। स एव शिवयोगीति कथ्यते।। इत्युपनिषत्।

—*—

# सरस्वतीरहस्योपनिषत्

कृष्णयजुर्वेदीया

वाङ्मे मनसि—इति शान्तिः

सरस्वतीदशश्लोकी

ऋषयो ह वै भगवन्तमाश्वलायनं संपूज्य पप्रच्छुः—

केनोपायेन तज्ज्ञानं तत्पदार्थावभासकम् ।
यदुपासनया तत्त्वं जानासि भगवन् वद ॥

सरस्वतीदशश्लोक्या सऋचा बीजमिश्रया ।
स्तुत्वा जप्त्वा परां सिद्धिमलभं मुनिपुङ्गवाः ॥

ऋषय ऊचुः—

कथं सारस्वतप्राप्तिः केन ध्यानेन सुव्रत ।
महासरस्वती येन तुष्टा भगवती वद ॥

स होवाचाश्वलायनः - अस्य श्रीसरस्वतीदशश्लोक-महामन्त्रस्य —अहमाश्वलायन ऋषिः । अनुष्टुप् छन्दः । श्रीवागीश्वरी देवता । यद्वागिति बीजम् । देवीं वाचमिति शक्तिः । प्रणो देवीति कीलकम् । विनियोगस्तत्प्रीत्यर्थे । श्रद्धा मेधा प्रज्ञा धारणा वाग्देवता महासरस्वतीत्येतैरङ्गन्यासः ।

नीहारहारघनसारसुधाकराभां
कल्याणदां कनकचम्पकदाम-भूषाम् ।
उत्तुङ्गपीनकुचकुम्भमनोहराङ्गीं
वाणीं नमामि मनसा वचसां विभूत्यै ॥

प्रणो देवीत्यस्य मन्त्रस्य — भरद्वाज ऋषिः । गायत्री छन्दः । श्रीसरस्वती देवता । प्रणवेन बीजशक्तिकीलकम् । इष्टार्थे विनियोगः । मन्त्रेण न्यासः ।

या वेदान्तार्थतत्त्वैकस्वरूपा परमेश्वरी ।
नामरूपात्मना व्यक्ता सा मां पातु सरस्वती ॥
ओं प्रणो दवी सरस्वती वाजेभिर्वाजिनीवती ।
धीनामवित्र्यवतु ।

आ नो दिव इति मन्त्रस्य — अत्रिर्ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । ह्रीमिति बीजशक्तिकीलकम् । इष्टार्थे विनियोगः । मन्त्रेण न्यासः ।

या साङ्गोपाङ्गवेदेषु चतुर्ष्वेकैव गीयते ।
अद्वैता ब्रह्मणः शक्तिः सा मां पातु सरस्वती ॥

ह्रीं आ नो दिवो बृहतः पर्वतादा सरस्वती यजता गन्तु यज्ञम् ।
हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु ॥

पावका न इति मन्त्रस्य — मधुच्छन्दा ऋषिः । गायत्री छन्दः । सरस्वती देवता । श्रीमिति बीजशक्तिकीलकम् । इष्टार्थे विनियोगः । मन्त्रेण न्यासः ।

या वर्णपदवाक्यार्थस्वरूपेणैव वर्तते ।
अनादिनिधनाऽनन्ता सा मां पातु सरस्वती ॥

श्रीं पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
यज्ञं वष्टु धिया वसुः ।

चोदयित्रीति मन्त्रस्य — मधुच्छन्दा ऋषिः । गायत्री छन्दः । सरस्वती देवता । ब्लूमिति बीजशक्तिकीलकम् । मन्त्रेण न्यासः ।

अध्यात्ममधिदैवं च देवानां सम्यगीश्वरी।

प्रत्यगास्ते वदन्ती या सा मां पातु सरस्वती॥

ब्लूं चोदयित्री सूनृतानां चेतन्ती सुमतीनाम्।

यज्ञं दधे सरस्वती॥

महो अर्णेति मन्त्रस्य — मधुच्छन्दा ऋषिः। गायत्री छन्दः। सरस्वती देवता। सौमिति बीजशक्तिकीलकम्। मन्त्रेण न्यासः।

अन्तर्याम्यात्मना विश्वं त्रैलोक्यं या नियच्छति।
रुद्रादित्यादिरूपस्था सा मां पातु सरस्वती॥

सौः महो अर्णः सरस्वती प्रचेतयति केतुना।
धियो विश्वा विराजति।

चत्वारि वागिति मन्त्रस्य — उचथ्यपुत्र ऋषिः। त्रिष्टुप् छन्दः। सरस्वती देवता। ऐमिति बीजशक्तिकीलकम्। मन्त्रेण न्यासः।

या प्रत्यग्दृष्टिभिर्जीवैर्व्यज्यमानाऽनुभूयते।
व्यापिनी ज्ञप्तिरूपैका सा मां पातु सरस्वती॥

ऐं चत्वारि वाक् परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति॥

यद्वाग्वदन्तीति मन्त्रस्य — भार्गव ऋषिः। त्रिष्टुप् छन्दः। सरस्वती देवता। क्लीमिति बीजशक्तिकीलकम्। मन्त्रेण न्यासः।

नामजात्यादिभिर्भेदैरष्टधा या विकल्पिता।

निर्विकल्पात्मना व्यक्ता सा मां पातु सरस्वती ॥

क्लीं यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा।
चतस्र ऊर्जं दुदुहे पयांसि क स्विदस्याः परमं जगाम ॥

देवीं वाचमिति मन्त्रस्य — भार्गव ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता। सौरिति बीजशक्तिकीलकम्। मन्त्रेण न्यासः ।

व्यक्ताव्यक्तगिरः सर्वे वेदाद्या व्याहरन्ति याम्।
सर्वकामदुघा धेनुः सा मां पातु सरस्वती ॥

सौः देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ॥

उत त्व इति मन्त्रस्य — बृहस्पतिर्ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता। समिति बीजशक्ति कीलकम्। मन्त्रेण न्यासः।

यां विदित्वाऽखिलं बन्धं निर्मथ्याखिलवर्त्मना।
योगी याति परं स्थानं सा मां पातु सरस्वती ॥

सं उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वां विसस्रे जायेव पत्य उशती सुवासाः ॥

अम्बितम इति मन्त्रस्य — गृत्समद ऋषिः । अनुष्टुप् छन्दः । सरस्वती देवता । ऐमिति बीजशक्तिकीलकम् । मन्त्रेण न्यासः ।

नामरूपात्मकं सर्वं यस्यामावेश्य तां पुनः ।
ध्यायन्ति ब्रह्मरूपैका सा मां पातु सरस्वति ॥

ऐं अम्बितमे नदीतमे देवितमे सरस्वति।
अप्रशस्ता इव स्मसि प्रशस्तिमम्ब नस्कृधि ॥

सरस्वतीप्रार्थना

चतुर्मुखमुखाम्भोजवनहंसवधूर्मम ।
मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ॥

नमस्ते शारदे देवि काश्मीरपुरवासिनि ।
त्वामहं प्रार्थये नित्यं विद्यादानं च देहि मे ॥

अक्षसूत्राङ्कुशधरा पाशपुस्तकधारिणी ।
मुक्ताहारसमायुक्ता वाचि तिष्ठतु मे सदा ॥

कम्बुकण्ठी सुताम्रोष्ठी सर्वाभरणभूषिता ।
महासरस्वती देवी जिह्वाग्रे संनिवेश्यताम् ॥

या श्रद्धा धारणा मेधा याग्देवी विधिवल्लभा ।
भक्तजिह्वाग्रसदना शमादिगुणदायिनी ॥

नमामि यामिनीनाथलेखाऽलङ्कृतकुन्तलाम् ।
भवानीं भवसन्तापनिर्वापणसुधानदीम् ॥

यः कवित्वं निरातङ्कं भुक्तिमुक्ती च वाञ्छति ।
सोऽभ्यर्च्यैनां दशश्लोक्या नित्यं स्तौति सरस्वतीम् ॥

तस्यैवं स्तुवतो नित्यं समभ्यर्च्य सरस्वतीम् ।
भक्तिश्रद्धाऽभियुक्तस्य षाण्मासात् प्रत्ययो भवेत् ॥

ततः प्रवर्तते वाणी स्वेच्छया ललिताक्षरा ।
गद्यपद्यात्मकैः शब्दैरप्रमेयैर्विवक्षितैः ॥
अश्रुतो बुध्यते ग्रन्थः प्रायः सारस्वतः कविः ॥

सा होवाच सरस्वती—

आत्मविद्या मया लब्धा ब्रह्मणैव सनातनी ।
ब्रह्मत्वं मे सदा नित्यं सच्चिदानन्दरूपतः ॥

प्रकृतित्वं ततः स्पृष्टं सत्त्वादिगुणसाम्यतः ।
सत्यामाभाति चिच्छाया दर्पणे प्रतिबिम्बवत् ॥

तेन चित्प्रतिबिम्बेन त्रिविधा भाति सा पुनः ।
प्रकृत्यवच्छिन्नतया पुरुषत्वं पुनश्च मे ॥

शुद्धसत्त्वप्रधानायां मायायां बिम्बितो ह्यजः ।
सत्त्वप्रधाना प्रकृतिर्मायेति प्रतिपाद्यते ॥

सा माया स्ववशोपाधिः सर्वज्ञस्येश्वरस्य हि ।
वश्यमायत्वमेकत्वं सर्वज्ञत्वं च तस्य तु ॥

सात्त्विकत्वात् समष्टित्वात् साक्षित्वाज्जगतामपि ।
जगत् कर्तुमकर्तुं वा चान्यथा कर्तुमीशते ।
यः स ईश्वर इत्युक्तः सर्वज्ञत्वादिभिर्गुणैः ॥

शक्तिद्वयं हि मायाया विक्षेपावृतिरूपकम् ।
विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत् सृजेत् ॥

अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः ।
आवृणोत्यपरा शक्तिः सा संसारस्य कारणम् ॥

जीवस्वरूपम्

साक्षिणः पुरतो भातं लिङ्गदेहेन संयुतम् ।
चितिच्छायासमावेशाज्जीवः स्याद्व्यावहारिकः ॥

अस्य जीवत्वमारोपात् साक्षिण्यप्यवभासते ।
आवृतौ तु विनष्टायां भेदे भातेऽपयाति तत् ॥

तथा सर्गब्रह्मणोश्च भेदमावृत्य तिष्ठति ।
या शक्तिस्तद्वशाद्ब्रह्म विकृतत्वेन भासते ॥

अत्राप्यावृतिनाशे न विभाति ब्रह्मसर्गयोः ।
भेदस्तयोर्विकारः स्यात् सर्गे न ब्रह्मणि क्वचित् ॥

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥

उपेक्ष्य नामरूपे द्वे सच्चिदानन्दतत्परः।
समाधिं सर्वदा कुर्याद्धृदये वाऽथ वा बहिः॥

सविकल्पो निर्विकल्पः समाधिर्द्विविधो हृदि।
दृश्यशब्दानुभेदेन सविकल्पः पुनर्द्विधा॥

कामाद्याश्चित्तगा दृश्यास्तत्साक्षित्वेन चेतनम्।
ध्यायेद्दृश्यानुविद्धोऽयं समाधिः सविकल्पकः॥

असङ्गः सच्चिदानन्दः स्वप्रभो द्वैतवर्जितः।
अस्मीतिशब्दविद्धोऽयं समाधिः सविकल्पकः॥

स्वानुभूतिरसावेशाद्दृश्यशब्दावुपेक्षितुः।
निर्विकल्पसमाधिः स्यान्निवातस्थितदीपवत्॥

हृदि वा बाह्यदेशेऽपि यस्मिन् कस्मिंश्च वस्तुनि।
समाधिराद्यः सन्मात्रान्नामरूपपृथक्कृतिः॥

स्तब्धीभावो रसास्वादात् तृतीयः पूर्ववन्मतः।
एतैः समाधिभिः षड्भिर्नयेत् कालं निरन्तरम्॥

देहाभिमाने गलिते विज्ञाते परमात्मनि।
यत्र यत्र मनो याति तत्र तत्र परामृतम्॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥

मयि जीवत्वमीशत्वं कल्पितं वस्तुतो न हि।
इति यस्तु विजानाति स मुक्तो नात्र संशयः॥

इत्युपनिषत्।

# शिवगीता

## प्रथमोऽध्यायः

ॐ नमः शिवाय।

सूत उवाच—

अथातः संप्रवक्ष्यामि शुद्ध-कैवल्य-मुक्तिदम्।
अनुग्रहान्महेशस्य भवदुःखस्य भेषजम्॥ १
न कर्मणा अनुष्ठानेन न दानैस्तपसापि वा।
कैवल्यं लभते मर्त्यः किं तु ज्ञानेन केवलम्॥ २
रामाय दण्डकारण्ये पार्वतीपतिना पुरा।
या प्रोक्ता शिवगीताख्या गुह्यात्-गुह्यतमापि च॥ ३
यस्याः स्मरण-मात्रेण नृणां मुक्तिर्ध्रुवा हि सा।
पुरा सनत्कुमाराय स्कन्देन अभिहिता हि सा॥ ४
सनत्कुमारः प्रोवाच व्यासाय मुनिसत्तमाः।
मह्यं कृपातिरेकेण प्रददौ बादरायणः॥ ५
उक्तं च तेन कस्मैचित् न दातव्यं इदं त्वया।
सूतपुत्र अन्यथा देवाः क्षुभ्यन्ति च शपन्ति च॥ ६
अथ पृष्टो मया विप्राः भगवान्बादरायणः।
भगवन्देवताः सर्वाः किं क्षुभ्यन्ति शपन्ति च।
तासां अत्रास्ति का हानिः यया कुप्यन्ति देवताः॥ ७
पाराशर्योऽथ मां आह यत्पृष्टं शृणु वत्सल।
नित्याग्निहोत्रिणो विप्राः सन्ति ये गृहमेधिनः॥ ८

त एव सर्वफलदाः सुराणां कामधेनवः।
भक्ष्यं भोज्यं च पेयं च यद्यदिष्टं सुपर्वणाम्।। ९
अग्नौ हुतेन हविषा तत्सर्वं लभ्यते दिवि।
नान्यदस्ति सुरेशानां इष्टसिद्धिप्रदं दिवि।। १०
दोग्ध्री धेनुर्यथा नीता दुःखदा गृहमेधिनाम्।
तथैव ज्ञानवान् विप्रो देवानां दुःखदो भवेत्।। ११
त्रिदशास्तेन विघ्नन्ति प्रविष्टा विषयं नृणाम्।
ततो न जायते भक्तिः शिवे कस्यापि देहिनः।। १२
तस्मात् अविदुषां नैव जायते शूलपाणिनः।
यथा कथंचित् जातापि मध्ये विच्छिद्यते नृणाम्।। १३
जातं वाऽपि शिवज्ञानं विश्वासं न भजत्यलम्।। १४
ऋषय ऊचुः।
यद्येवं देवता विघ्नं आचरन्ति तनूभृताम्।
पौरुषं तत्र कस्यास्ति तेन मुक्तिर्भविष्यति।। १५
सत्यं सूतात्मज ब्रूहि तत्रोपायोऽस्ति वा न वा।
सूत उवाच—
कोटिजन्मार्जितैः पुण्यैः शिवे भक्तिः प्रजायते।। १६
दैवं पुरुषकारं च सिद्ध्यतोऽन्योन्यसंश्रयात्।
इष्टापूर्तानि कर्माणि तेन आचरति मानवः।
शिवार्पण-धिया कामान् परित्यज्य यथाविधि।। १७
अनुग्रहात् तेन शम्भोर्जायते सुदृढो नरः।
ततो भीताः पलायन्ते विघ्नं हित्वा सुरेश्वराः।। १८

जायते तेन शुश्रूषा चरिते चन्द्रमौलिनः।
शृण्वतो जायते ज्ञानं ज्ञानादेव विमुच्यते॥ १९
बहुनात्र किमुक्तेन यस्य भक्तिः शिवे दृढा।
महापापौघपापौघ-कोटिग्रस्तो विमुच्यते॥ २०
अपि चेत् सुदुराचारः भजते मां अनन्यभाक्।
साधुरेव स मन्तव्यः सम्यक् व्यवसितो हि सः॥ २१
संसारबन्धनात् तस्मात् अन्यः को वा विमूढधीः।
नियमाद्यस्तु कुर्वीत भक्तिं वा द्रोहमेव वा।
तस्यापि चेत्प्रसन्नोऽसौ फलं यच्छति वाञ्छितम्॥ २२
ऋद्धं किंचित् समाधाय क्षुल्लकं जलमेव वा।
यो दत्ते नियमेनासौ तस्मै दत्ते जगत्त्रयम्॥ २३
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तत्रापि अशक्तो नियमात् नमस्कारं प्रदक्षिणम्।
यः करोति महेशस्य तस्मै तुष्टो भवेच्छिवः॥ २४
प्रदक्षिणासु अशक्तोपि यः स्वान्ते चिन्तयेच्छिवम्।
गच्छन्समुपविष्टो वा तस्याभीष्टं प्रयच्छति॥ २५
चन्दनं बिल्वकाष्ठस्य पुष्पाणि वनजान्यपि।
फलानि तादृशान्येव यस्य प्रीतिकराणि वै।
दुष्करं तस्य सेवायां किमस्ति भुवनत्रये॥ २६
वन्येषु यादृशी प्रीतिर्वर्तते परमेशितुः।
उत्तमेष्वपि नास्त्येव ग्रामजेष्वपि तादृशी॥ २७
तं त्यक्त्वा तादृशं देवं यः सेवेतान्यदेवताम्।
स हि भागीरथीं त्यक्त्वा काङ्क्षते मृगतृष्णिकाम्॥ २८

किं तु यस्यास्ति दुरितं कोटिजन्मसु संचितम्।
तस्य प्रकाशते नायं त्वर्थो मोहान्धचेतसः ॥ २९
न कालनियमो यत्र न देशस्य स्थलस्य च।
यत्रास्य रमते चित्तं तत्र ध्यानेन केवलम्।
स्वात्मत्वेन शिवस्यासौ शिवसायुज्यमाप्नुयात्॥ ३०
अतिस्वल्पतरायुः श्रीभूतेशांशाधिपोऽपि यः।
स तु राजाहमस्मीति वादिनं हन्ति सान्वयम्॥ ३१
कर्तापि सर्वलोकानां अक्षयैश्वर्यवानपि।
शिवः शिवोहमस्मीति वादिनं यं च कश्चन।
आत्मना सह तादात्म्यभागिनं कुरुते भृशम्॥ ३२
धर्मार्थकाममोक्षाणां पारं यास्यन्ति येन वै।
मुनयस्तत्प्रवक्ष्यामि व्रतं पाशुपताभिधम्॥ ३३
कृत्वा तु विरजां दीक्षां भूतिरुद्राक्षधारिणः।
जपन्तो वेदसाराख्यं शिवनामसहस्रकम्। ३४
संत्यज्य येन मर्त्यत्वं शैवीं तनुं अवाप्य च।
ततः प्रसन्नो भगवाञ्छङ्करो लोकशङ्करः।
भवतां दृश्यतामेत्य कैवल्यं वः प्रदास्यति॥ ३५
रामाय दण्डकारण्ये यत्प्रादात्कुम्भसंभव:।
तत्सर्वं वः प्रवक्ष्यामि शृणुध्वं भक्तियोगिनः॥ ३६

—*—

## द्वितीयोऽध्यायः

ऋषय ऊचुः

किमर्थमागतोऽगस्त्यो रामचन्द्रस्य संनिधिम्।
कथं वा विरजां दीक्षां कारयामास राघवम्॥ १
ततः किमाप्तवान्रामः फलं तद्वक्तुमर्हसि॥

सूत उवाच—

रावणेन यदा सीतापहृता जनकात्मजा।
तदा वियोगदुःखेन विलपन्नास राघवः॥ २
निर्निद्रो निरहङ्कारो निराहारो दिवानिशम्।
मोक्तुमैच्छत्ततः प्राणान्सानुजो रघुनन्दनः॥ ३
लोपामुद्रापतिर्ज्ञात्वा तस्य संनिधिमागमत्।
अथ तं बोधयामास संसारासारतां मुनिः॥ ४
किं विषीदसि राजेन्द्र कान्ता कस्य विचार्यताम्।
जडः किं नु विजानाति देहोऽयं पाञ्चभौतिकः॥ ५
निर्लेपः परिपूर्णश्च सच्चिदानन्दविग्रहः।
आत्मा न जायते नैव म्रियते न च दुःखभाक्॥ ६
सूर्योऽसौ सर्वलोकस्य चक्षुष्ट्वेन व्यवस्थितः।
तथापि चाक्षुषैर्दोषैर्न कदाचिद्विलिप्यते॥ ७
सर्वभूतान्तरात्मापि तद्वद्दुःखैर्न लिप्यते।
देहोऽपि मलपिण्डोऽयमुक्तजीवो जडात्मकः॥ ८
दह्यते वह्निना काष्ठैः शवाद्यैर्भक्ष्यतेऽपि वा।
तथापि नैव जानाति विरहे तस्य का व्यथा॥ ९

सुवर्णगौरी दूर्वाया दलवच्छयामलापि वा।
पीनोत्तुङ्गस्तनाभोगभुग्रसूक्ष्मावलग्नका।। १०
बृहन्नितम्बजघना रक्तपादसरोरुहा।
राकाचन्द्रमुखी विम्बप्रतिबिम्बरदच्छदा।। ११
नीलेन्दीवरनीकाशनयनद्वयशोभिता।
मत्तकोकिलसंल्लापा मत्तद्विरदगामिनी।। १२
कटाक्षैरनुगृह्णाति मां पञ्चेषुशरोत्तमैः।
इति यां मन्यते मूर्खः स च पञ्चेषुशासितः।। १३
तस्याविवेकं वक्ष्यामि शृणुष्वावहितो नृप।
न च स्त्री न पुमानेष न चैवायं नपुंसकः।
अमूर्तः पुरुषः पूर्णो द्रष्टा साक्षी सजीवनः।। १४
या तन्वङ्गी मृदुर्बाला मलपिण्डात्मिका जडा।
सा न पश्यति यत्किञ्चिन्न शृणोति न जिघ्रति।। १५
चर्ममात्रा तनुस्तस्या बुद्ध्वा वीक्षस्व राघव ।
या प्राणादधिका सैव हन्त ते स्याद्घृणास्पदम्।। १६
जायन्ते यदि भूतेभ्यो देहिनः पाञ्चभौतिकः।
आत्मा यदेकलस्तेषु परिपूर्णः सनातनः।। १७
का कान्ता तत्र कः कान्तः सर्व एव सहोदरः।। १८
निर्मितायां गृहावल्यां तदवच्छिन्नतां गतम्।
नभस्तस्यां तु दग्धायां न काञ्चित्क्षतिमृच्छति।। १९
तद्वदात्मापि देहेषु परिपूर्णः सनातनः।
हन्यमानेषु तेष्वेव स्वयं नैव विहन्यते।। २०

हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्।
तावुभौ न विजानीतो नायं हन्ति न हन्यते॥ २१
अस्मान्नृपातिदुःखेन किं खेदस्यापि कारणम्।
स्वस्वरूपं विदित्वेदं दुःखं त्यक्त्वा सुखी भव॥ २२
श्री राम उवाच-
मुने देहस्य नो दुःखं नैव चेत्परमात्मनः।
सीतावियोगदुःखाग्निर्मां भस्मीकुरुते कथम्॥ २३
सदानुभूयते योऽर्थः स नास्तीति त्वयेरितः।
जायतां तत्र विश्वासः कथं मे मुनिपुङ्गव॥ २४
अन्योस्ति नास्ति को भोक्ता येन जन्तुः प्रतप्यते।
सुखाय वापि दुःखस्य तद्ब्रूहि मुनिसत्तम॥ २५
अगस्त्य उवाच—
दुर्ज्ञेया शाम्भवी माया तया संमोह्यते जगत्।
मायां तु प्रकृतिं विद्धि मायिनं तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥ २६
सत्यज्ञानात्मकोऽनन्तो विभुरात्मा महेश्वरः।
तस्यैवांशो जीवलोके हृदये प्राणिनां स्थितिः॥ २७
विस्फुलिङ्गा यथा वह्नेर्जायन्ते काष्ठयोगतः।
अनादिकर्मसंबद्धास्तद्वदंशा महेशितुः।
अनादिवासनायुक्ताः क्षेत्रज्ञा इति ते स्मृताः॥ २८
मनो बुद्धिरहङ्कारश्चित्तं चेति चतुष्टयम्।
अन्तःकरणमित्याहुस्तत्र ते प्रतिबिम्बिताः॥ २९

जीवत्वं प्रापुयुः कर्मफलभोक्तार एव ते ।
ततो वैषयिकं तेषां सुखं वा दुःखमेव वा ।। ३०
त एव भुञ्जते भोगायतनेऽस्मिछरीरके ।। ३१
स्वावरं जङ्गमं चेति द्विविधं वपुरुच्यते ।
स्थावरास्तत्र देहाः स्युः सूक्ष्मा गुल्मलतादयः ।। ३२
अण्डजाः स्वेदजास्तद्वदुद्भिज्जा इति जङ्गमाः ।। ३३
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्ये प्रपद्यन्ते यथाकर्म यथाश्रुतम् ।। ३४
सुख्यहं दुःख्यहं चेति जीव एवाभिमन्यते ।
निर्लेपोऽपि परं ज्योतिर्मोहितः शम्भुमायया ।। ३५
कामः क्रोधस्तथा लोभो मदो मात्सर्यमेव च ।
मोहश्चेत्यरिषड्वर्गमहङ्कारगतं विदुः ।। ३६
स एव बध्यते जीवः स्वप्नजाग्रदवस्थयोः ।
सुषुप्तौ तदभावाच्च जीवः शङ्करतां गतः ।। ३७
स एव मायया स्पृष्टः कारणं सुखदुःखयोः ।
शुक्तौ रजतवद्विश्वं मायया दृश्यते शिवे ।। ३८
ततो विवेकज्ञानेन न कोऽप्यत्रास्ति दुःखभाक् ।
ततो विरम दुःखात्त्वं किं मुधा परितप्यते ।। ३९

श्रीराम उवाच—

मुने सर्वमिदं सत्यं यन्मदग्रे त्वयेरितम् ।
तथापि न जहात्येतत्प्रारब्धादृष्टमुल्बणम् ।। ४०
मत्तं कुर्याद्यथा मद्यं नष्टाविद्यमपि द्विजम् ।
तद्वत्प्रारब्धभोगोऽपि न जहाति विवेकिनम् ।। ४१

ततः किं बहुनोक्तेन प्रारब्धः स शिवः स्मरः।
बाधते मां दिवारात्रमहङ्कारोऽपि तादृशः॥ ४२
अत्यन्तपीडितो जीवः स्थूलदेहं विमुञ्चति।
तस्माज्जीवाप्तये मह्यमुपायः क्रियतां द्विज॥ ४३

—*—

## तृतीयोऽध्यायः

अगस्त्य उवाच—
न गृह्णाति वचः पथ्यं कामक्रोधादिपीडितः।
हितं न रोचते तस्य मुमूर्षोरिव भेषजम्॥ १
मध्ये समुद्रं या नीता सीता दैत्येन मायिना।
आयास्यति नरश्रेष्ठ सा कथं तव संनिधिम्॥ २
बध्यन्ते देवताः सर्वा द्वारि मर्कटयूथवत्।
किं च चामरधारिण्यो यस्य सन्ति सुराङ्गनाः॥ ३
भुङ्क्ते त्रिलोकीमखिलां यः शम्भुवरदर्पितः।
निष्कण्टकं तस्य जयः कथं तव भविष्यति॥ ४
इन्द्रजिन्नाम पुत्रो यस्तस्यास्तीशवरोद्धतः।
तस्याग्रे सङ्गरे देवा बहुवारं पलायिताः॥ ५
कुम्भकर्णाह्वयो भ्राता यस्यास्ति सुरसूदनः।
अन्यो दिव्यास्त्रसंयुक्तश्चिरञ्जीवी विभीषणः॥ ६
दुर्गं यस्यास्ति लङ्काख्यं दुर्जयं देवदानवैः।
चतुरङ्गबलं यस्य वर्तते कोटिसंख्यया॥ ७
एकाकिना त्वया जेयः स कथं नृपनन्दन।
आकाङ्क्षते करे धर्तुं बालश्चन्द्रमसं यथा॥ ८

तथा त्वं काममोहेन जयं तस्याभिवाञ्छसि ॥ ९
श्रीराम उवाच—
क्षत्रियोऽहं मुनिश्रेष्ठ भार्या मे रक्षसा हृता।
यदि तं न निहन्म्याशु जीवने मेऽस्ति किं फलम् ॥ १०
अतस्ते तत्त्वबोधेन न में किंचित्प्रयोजनम्।
कामक्रोधादयः सर्वे दह्यते तैस्तनुर्मम ॥ ११
अहङ्कारोऽपि मे नित्यं जीवनं हन्तुमुद्यतः ॥ १२
हृतायां निजकान्तायां शत्रुणाऽवमतस्य वा।
यस्य तत्वबुभुत्सा स्यात्स लोके पुरुषाधमः ॥ १३
तस्मात्तस्य वधोपायं लङ्घयित्वाम्बुधिं रणे।
ब्रूहि मे मुनिशार्दूल त्वत्तो नान्योऽस्ति मे गुरुः ॥ १४
अगस्त्य उवाच—
एवं चेच्छरणं याहि पार्वतीपतिमव्ययम्।
स चेत्प्रसन्नो भगवान्वाञ्छितार्थं प्रयच्छति ॥ १५
देवैरजेयः शक्राद्यैर्हरिणा ब्रह्मणापि वा।
स ते वध्यः कथं वा स्याच्छङ्करानुग्रहं विना ॥ १६
अतस्त्वां दीक्षयिष्यामि विरजागममाश्रितः।
तेन मार्गेण मर्त्यत्वं हित्वा तेजोमयो भव ॥ १७
येन हत्वा रणे शत्रून्सर्वान्कामानवाप्स्यसि।
भुक्त्वा भूमण्डलं चान्ते शिवसायुज्यमाप्स्यसि ॥ १९
सूत उवाच—
अथ प्रणम्य रामस्तं दण्डवन्मुनिसत्तमम्।
उवाच दुःखनिर्मुक्तः प्रहृष्टेनान्तरात्मना ॥ १९

श्रीराम उवाच—

कृतार्थोऽहं मुने जातो वाञ्छितार्थो ममागतः ।
पीताम्बुधिः प्रसन्नस्त्वं यदि मे किमु दुर्लभम्।
अतस्त्वं विरजादीक्षां ब्रूहि मे मुनिसत्तम ॥ २०

अगस्त्य उवाच—

शुक्लपक्षे चतुर्दश्यां अष्टम्यां वा विशेषतः ।
एकादश्यां सोमवारे आर्द्रायां वा समारभेत् ॥ २१
यं वाममाहुर्यं रुद्रं शाश्वतं परमेश्वरम् ।
परात्परं परं चाहुः परात्परतरं शिवम् ।
ब्रह्मणो जनकं विष्णोर्वह्नेर्वायोः सदाशिवम् ॥ २२
ध्यात्वाग्निनावसथ्याग्निं विशोध्य च पृथक्पृथक् ।
पञ्चभूतानि संयम्य दग्ध्वा गुणविधिक्रमात् ॥ २३
मात्राः पञ्च चतस्रश्च त्रिमात्रा द्विस्ततः परम् ।
एकमात्रममात्रं च द्वादशान्तव्यवस्थितम् ॥ २४
स्थित्यां स्थाप्यामृतो भूत्वा व्रतं पाशुपतं चरेत् ॥ २५
इदं व्रतं पाशुपतं कथयिष्ये समासतः ।
प्रातरेव तु संकल्प्य निधायाग्निं स्वशाखया ॥ २६
उपोषितः शुचिः स्नातः शुक्लाम्बरधरः स्वयम् ।
शुक्लयज्ञोपवीतश्च शुक्लमाल्यानुलेपनः ॥ २७
जुहुयाद्विरजोमन्त्रैः प्राणापानादिभिस्ततः ।
अनुवाकान्तमेकाग्रः समिदाज्यचरून्पृथक् ॥ २८
आत्मन्यग्निं समारोप्य या ते अग्नेति मन्त्रतः ।
भस्मादायाग्निरित्याद्यैर्विमृज्याङ्गानि संस्पृशेत् ॥ २९

भस्मच्छन्नो द्विजो विद्वान्महापातकसंभवैः ।
पापैर्विमुच्यते नित्यं मुच्यते न च संशयः ।। ३०
अग्निवीर्यं यतो भस्म वीर्यवान्भस्मसंयुतः ।
भस्मस्नानरतो विप्रो भस्मशायी जितेन्द्रियः ।। ३१
सर्वपापविनिर्मुक्तः शिवसायुज्यमाप्नुयात् ।
एवं कुरु महाराज शिवनामसहस्रकम् ।। ३२
इदं तु संप्रदास्यामि तेन सर्वमवाप्स्यसि ।। ३३
इत्युक्त्वा प्रददौ तस्मै शिवनामसहस्रकम् ।
वेदसाराभिधं नित्यं शिवप्रत्यक्षकारकम् ।। ३४
उक्तं च तेन रामत्वं जप नित्यं दिवानिशम् ।
ततः प्रसन्नो भगवान्महापाशुपतास्त्रकम् ।
तुभ्यं दास्यति तेन त्वं शत्रून्हत्वाप्स्यसि प्रियाम् ।। ३५
तस्यैवास्त्रस्य माहात्म्यात्समुद्रं शोषयिष्यसि ।
संहारकाले जगतामस्त्रं तत्पार्वतीपतेः ।। ३६
तदलाभे दानवानां जयस्तव सुदुर्लभः ।
तस्माल्लब्धुं तदेवास्त्रं शरणं याहि शङ्करम् ।। ३७

—*—

## चतुर्थोऽध्यायः

सूत उवाच—

एवमुक्त्वा मुनिश्रेष्ठे गते तस्मिन्निजाश्रमम् ।
अथ रामगिरौ रामः पुण्ये गोदावरीतटे ।। १
शिवलिङ्गं प्रतिष्ठाप्य कृत्वा दीक्षां यथाविधि ।
भूतिभूषितसर्वाङ्गो रुद्राक्षाभरणैर्युतः ।। २

अभिषिच्य जलैः पुण्यैर्गौतमीसिन्धुसम्भवैः ।
अर्चयित्वा वन्यपुष्पैस्तद्वद्वन्यफलैरपि ।। ३
भस्मच्छन्नो भस्मशायी व्याघ्रचर्मासने स्थितः ।
नाम्नां सहस्रं प्रजपन्नक्तंदिवमनन्यधीः ।। ४
मासमेकं फलाहारो मासं पर्णाशनः स्थितः ।
मासमेकं जलाहारो मासं च पवनाशनः ।। ५
शान्तो दान्तः प्रसन्नात्मा ध्यायन्नेवं महेश्वरम् ।
हृत्पङ्कजे समासीनमुमादेहार्धधारिणम् ।। ६
चतुर्भुजं त्रिनयनं विद्युत्पिङ्गजटाधरम् ।
कोटिसूर्यप्रतीकाशं चन्द्रकोटिसुशीतलम् ।। ७
सर्वाभरणसंयुक्तं नागयज्ञोपवीतिनम् ।
व्याघ्रचर्माम्बरधरं वरदाभयधारिणम् ।। ८
व्याघ्रचर्मोत्तरीयं च सुरासुरनमस्कृतम् ।
पञ्चवक्त्रं चन्द्रमौलिं त्रिशूलडमरूधरम् ।। ९
नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम् ।
एवं नित्यं प्रजपतो गतं मासचतुष्टयम् ।। १०
अथ जातो महानादः प्रलयाम्बुधिभीषणः ।
समुद्रमथनोद्भूतमन्दरावनिभृद्ध्वनिः ।। ११
रुद्रबाणाग्निसंदीप्तभृशत्रिपुरविभ्रमः ।
तमाकर्ण्याथ संभ्रान्तो यावत्पश्यति पुष्करम् ।
तावदेव महातेजो रामस्यासीत्पुरो द्विजाः ।। १२
तेजसा तेन संभ्रान्तो नापश्यत्स दिशो दश ।
अन्धीकृतेक्षणस्तूर्णं मोहं यातो नृपात्मजः ।। १३

सूत उवाच—

विचिन्त्य तर्कयामास दैत्यमायां द्विजेश्वराः।

अथोत्थाय महावीरः सज्यं कृत्वा धनुः स्वकम्॥ १४

अविध्यन्निशितैर्बाणैर्दिव्यास्त्रैरभिमन्त्रितैः।

आग्नेयं वारुणं सौम्यं मोहनं सौरपार्वतम्॥ १५

विष्णुचक्रं महाचक्रं कालचक्रं च वैष्णवम्।

रौद्रं पाशुपतं ब्राह्मं कौबेरं कुलिशानिलम्॥ १६

भार्गवादिबहून्यस्त्राण्ययं प्रायुङ्क्त राघवः॥ १७

तस्मिंस्तेजसि शस्त्राणि चास्त्राण्यस्य महीपतेः।

विलीनानि महाभ्रस्य कारका इव नीरधौ॥ १८

ततः क्षणेन जज्वाल धनुस्तस्य कराच्युतम्।

तूणीरं चाङ्गुलित्राणं गोधिकापि महीपतेः॥ १९

तद्दृष्ट्वा लक्ष्मणो भीतः पपात भुवि मूर्च्छितः।

अथाकिंचित्करो रामो जानुभ्यामवनिं गतः॥ २०

मीलिताक्षो भयाविष्टः शङ्करं शरणं गतः।

स्वरेणाप्युच्चरन्नुच्चैः शम्भोर्नामसहस्रकम्॥ २१

शिवं च दण्डवद्भूमौ प्रणनाम पुनः पुनः।

पुनश्च पूर्ववच्चासीच्छब्दो दिङ्मण्डलं स्वनन्।

चचाल वसुधा घोरं पर्वताश्च चकम्पिरे॥ २२

अथ क्षणेन शीतांशुशीतलं तेज आदधत्।

उन्मीलिताक्षो रामस्तु यावद्यावत्प्रपश्यति॥ २३

तावद्ददर्श वृषभं सर्वालङ्कारसंयुतम्।

पीयूषमथनोद्भूतनवनीतस्य पिण्डवत्॥ २४

प्रोतस्वर्ण मरकतच्छायाशृङ्गद्वयाञ्चितम्।
नीलरत्नेक्षणं ह्रस्वकण्ठकम्बलभूषितम्॥ २५
रत्नपल्याणसंयुक्तं निबद्धं श्वेतचामरैः।
घण्टिकाघर्घरीशब्दैः पूरयन्तं दिशो दश॥ २६
तत्रासीनं महादेवं शुद्धस्फटिकविग्रहम्।
कोटिसूर्यप्रतीकाशं कोटिशीतांशुशीतलम्॥ २७
व्याघ्रचर्माम्बरधरं नागयज्ञोपवीतिनम्।
सर्वालङ्कारसंयुक्तं विद्युत्पिङ्गजटाधरम्॥ २८
नीलकण्ठं व्याघ्रचर्मोत्तरीयं चन्द्रशेखरम्।
नानाविधायुधोद्भासिदशबाहुं त्रिलोचनम्॥ २९
युवानं पुरुषश्रेष्ठं सच्चिदानन्दविग्रहम्॥ ३०
तत्रैव स सुखासीनां पूर्णचन्द्रनिभाननाम्।
नीलेन्दीवरदामाभामुद्यन्मरकतप्रभाम्॥ ३१
मुक्ताभरणसंयुक्तां रात्रिं ताराचितामिव।
विन्ध्यक्षितिधरोत्तुङ्गकुचभारभरालसाम्॥ ३२
सदसत्संशयाविष्टमध्यदेशान्तरां वराम्।
दिव्याभरणसंयुक्तां दिव्यगन्धानुलेपनाम्॥ ३३
दिव्यमाल्याम्बरधरां नीलेन्दीवरलोचनाम्।
अलकोद्भासिवदनां ताम्बूलग्रासशोभिताम्॥ ३४
शिवालिङ्गनसंजातपुलकोद्भासिविग्रहाम्।
सच्चिदानन्दरूपाढ्यां जगन्मातरमम्बिकाम्॥ ३५
सौन्दर्यसारसन्दोहां ददर्श रघुनन्दनः।
स्वस्ववाहनसंबद्धान्नानायुधलसत्करान्॥ ३६

बृहद्रथन्तरादीनि सामानि परिगायतः ।
स्वस्वकान्तासमायुक्तान्दिक्पालान्परितः स्थितान् ।। ३७
अग्रगं गरुडारूढं शङ्खचक्रगदाधरम् ।
कालाम्बुदप्रतीकाशं विद्युत्कान्तश्रिया युतम् ।। ३८
जपन्तमेकमनसा रुद्राध्यायं जनार्दनम् ।
पश्चाच्चतुर्मुखं देवं ब्रह्माणं हंसवाहनम् ।। ३९
चतुर्वक्त्रैश्चतुर्वेदरुद्रसूक्तैर्महेश्वरम् ।
स्तुवन्तं भारतीयुक्तं दीर्घकूर्चं जटाधरम् ।। ४०
अथर्वशिरसा देवं स्तुवन्तं मुनिमण्डलम् ।
गङ्गादितटिनीयुक्तमम्बुधिं नीलविग्रहम् ।। ४१
श्वेताश्वतरमन्त्रेण स्तुवन्तं गिरिजापतिम् ।
अनन्तादिमहानागान्कैलासगिरिसंनिभान् ।। ४२
कैवल्योपनिषत्पाठान्मणिरत्नविभूषितान् ।
सुवर्णवेत्रहस्ताढ्यं नन्दिनं पुरतः स्थितम् ।। ४३
दक्षिणे मूषकारूढं गणेशं पर्वतोपमम् ।
मयूरवाहनारूढमुत्तरे षण्मुखं तथा ।। ४४
महाकालं च चण्डेशं पार्श्वयोर्भीषणाकृतिम् ।
कालाग्निरुद्रं दूरस्थं ज्वलद्दावाग्निसंनिभम् ।। ४५
त्रिपादं कुटिलाकारं नटभृङ्गिरिटिं पुरः ।
नानाविकारवदनान्कोटिशः प्रमथाधिपान् ।। ४६
नानावाहनसंयुक्तं परितो मातृमण्डलम् ।
पञ्चाक्षरीजपासक्तान्सिद्धविद्याधरादिकान् ।। ४७

दिव्यरुद्रकगीतानि गायत्किन्नरवृन्दकम्।
तत्र त्रियम्बकं मन्त्रं जपद्द्विजकदम्बकम्॥ ४८
गायन्तं वीणया गीतं नृत्यन्तं नारदं दिवि।
नृत्यन्त्यो नाट्यनृत्येन रम्भादीनप्सरोगणान्॥ ४९
गायच्चित्ररथादीनां गन्धर्वाणां कदम्बकम्।
कम्बलाश्वतरौ शम्भुकर्णकुण्डलतां गतौ॥ ५०
गायन्तौ पन्नगौ गीतं कपालं कम्बलं तथा।
एवं देवसभां दृष्ट्वा कृतार्थो रघुनन्दनः। ५१
हर्षगद्गदया वाचा स्तुवन्देवं महेश्वरम्।
दिव्यनामसहस्रेण प्रणनाम पुनःपुनः॥ ५२

—*—

## पञ्चमोऽध्यायः

श्रीसूत उवाच—
अथ प्रादुरभूत्तत्र हिरण्मयरथो महान्।
अनेकदिव्यरत्नांशुकिर्मीरितदिगन्तरः॥ १
नद्युपान्तिकपङ्काढ्यमहाचक्रचतुष्टयः।
मुक्तातोरणसंयुक्तः श्वेतच्छत्रशतावृतः॥ २
शुद्धहेमखुरैराढ्यतुरङ्गगणसंयुतः।
मुक्तावितानविलसदूर्ध्वदिव्यवृषध्वजः॥ ३
मत्तवारणिकायुक्तः पञ्चतत्त्वोपशाभितः।
पारिजाततरूद्भूतपुष्पमालाभिरञ्जितः॥ ४
मृगनाभिसमुद्भूतकस्तूरीमदपङ्किलः।
कर्पूरागरुधूपोत्थगन्धाकृष्टमधुव्रतः॥ ५

संवर्तघनघोषाढ्यो नानावाद्यसमन्वितः ।
वीणावेणुस्वनासक्तकिन्नरीगणसंकुलः ।। ६
एवं कृत्वा रथश्रेष्ठं वृषादुत्तीर्य शङ्करः ।
अम्बया सहितस्तत्र पटतल्पेऽविशत्तदा ।। ७
सुरनीरजनेत्रीणां श्वेतचामरचालनैः ।
दिव्यव्यजनवातैश्च प्रहृष्टो नीललोहितः ।। ८
कणत्कङ्कणनिध्वानैर्मञ्जुमञ्जीरसिंजितैः ।
वीणावेणुस्वनैर्गीतैः पूर्णमासीज्जगत्त्रयम् ।। ९
शुकवाक्यकलारावैः श्वेतपारावतस्वनैः ।
उन्निद्रभूषाफणिनां दर्शनादेव बर्हिणः ।।
ननृतुर्दर्शयन्तः स्वांश्चन्द्रकान्कोटिसंख्यया ।। १०
प्रणमन्तं यतो राममुत्थाप्य वृषभध्वजः ।
आनिनाय रथं दिव्यं प्रहृष्टेनान्तरात्मना ।। ११
कमण्डलुजलैः स्वच्छैः स्वयमाचम्य यत्नतः ।
समाचम्याथ पुरतः स्वाङ्के राममुपानयत् ।। १२
अथ दिव्यं धनुस्तस्मै ददौ तूणीरमक्षयम् ।
महापाशुपतं नाम दिव्यमस्त्रं ददौ ततः ।। १३
उक्तश्च तेन रामोऽपि सादरं चन्द्रमौलिना ।
जगन्नाशकरं रौद्रमुग्रमस्त्रमिदं नृप ।। १४
अतो नेदं प्रयोक्तव्यं सामान्यसमरादिके ।
अन्यो नास्ति प्रतीघात एतस्य भुवनत्रये ।। १५
तस्मात्प्राणात्यये राम प्रयोक्तव्यमुपस्थिते ।
अन्यदेतत्प्रयुक्तं चेज्जगत्संक्षयकृद्भवेत् ।। १६

अथाहूय सुरश्रेष्ठाल्लोकपालान्महेश्वरः ।
उवाच परमप्रीतः स्वस्वमस्त्रं प्रयच्छत ।। १७
राघवोऽयं च तैरस्त्रै रावणं निहनिष्यति ।
तस्मै देवैरवध्यत्वमिति दत्तो वरो मया ।। १८
तस्माद्वानरतामेत्य भवन्तो युद्धदुर्मदाः ।
साहाय्यमस्य कुर्वन्तु तेन सुस्था भविष्यथ ।। १९
तदाज्ञां शिरसा गृह्य सुराः प्राञ्जलयस्तदा ।
प्रणम्य चरणौ शम्भोः स्वं स्वमस्त्रं ददुर्मुदा ।। २०
नारायणास्त्रं दैत्यारिरैन्द्रमस्त्रं पुरन्दरः ।
ब्रह्मापि ब्रह्मदण्डास्त्रमाग्नेयास्त्रं धनञ्जयः ।। २१
याम्यं यमोऽपि मोहास्त्रं रक्षोराजस्तथा ददो ।
वरुणो वारुणं प्रादाद्वायव्यास्त्रं प्रभञ्जनः ।। २२
कौबेरं च कुबेरोऽपि रौद्रमीशान एव च ।
सौरमस्त्रं ददौ सूरः सौम्यं सोमश्च पावकम् ।
विश्वेदेवा ददुस्तस्मै वसवो वासवाभिधम् ।। २३
अथ तुष्टः प्रणम्येशं रामो दशरथात्मजः ।
प्राञ्जलिः प्रणतो भूत्वा भक्तियुक्तो व्यजिज्ञपत् ।। २४
श्रीराम उवाच—
भगवन्मानुषैरेव नोल्लङ्घ्यो लवणाम्बुधिः ।
तत्र लङ्काभिधं दुर्गं दुर्जयं देवदानवैः ।। २५
अनेककोटयस्तत्र राक्षसा बलवत्तराः ।
सर्वे स्वाध्यायनिरताः शिवभक्ता जितेन्द्रियाः ।। २६

अनेकमायासंयुक्ता बुद्धिमन्तोऽग्निहोत्रिणः ।
कथमेकाकिना जेया मया भ्रात्रा च संयुगे ।। २७

ईश्वर उवाच—

रावणस्य वधे राम रक्षसामपि मारणे ।
विचारो न त्वया कार्यस्तस्य कालोऽयमागतः ।। २८
अधर्मे तु प्रवृत्तास्ते देवब्राह्मणपीडने ।
तस्मादायुः क्षयं यातं तेषां श्रीरपि सुव्रत ।। २९
राजस्त्रीलङ्घनासक्तं रावणं निहनिष्यसि ।
पानासक्तो रिपुर्जेतुं सुकरः समराङ्गणे ।। ३०
अधर्मनिरतः शत्रुर्भाग्येनैव हि लभ्यते ।
अधीतवेदशास्त्रोऽपि सदा धर्मरतोऽपि वा ।
विनाशकाले संप्राप्ते धर्ममार्गाच्च्युतो भवेत् ।। ३१
पीड्यन्ते देवताः सर्वाः सततं येन पाप्मिना ।
ब्राह्मणा ऋषयश्चैव तस्य नाशः स्वयं स्थितः ।। ३२
किष्किन्धानगरे राम देवानामंशसंभवाः ।
वानरा बहवो जाता दुर्जया बलवत्तराः ।। ३३
साहाय्यं ते करिष्यन्ति तैर्बधान पयोनिधिम् ।
अनेकशैलसंबद्धे सेतौ यान्तु वलीमुखाः ।
रावणं सगणं हत्वा तामानय निजप्रियाम् ।। ३४
शस्त्रैर्युद्धे जयो यत्र तत्रास्त्राणि न योजयेत् ।
निरस्त्रेष्वल्पशस्त्रेषु पलायनपरेषु च ।
अस्त्राणि मुञ्चन्दिव्यानि स्वयमेव विनश्यति ।। ३५

अथवा किं बहूक्तेन मयैवोत्पादितं जगत्।
मयैव पाल्यते नित्यं मया संह्रियतेऽपि च॥ ३६
अहमेको जगन्मृत्युर्मृत्योरपि महीपते।
ग्रसेऽहमेव सकलं जगदेतच्चराचरम्॥ ३७
मम वक्त्रगताः सर्वे राक्षसा युद्धदुर्मदाः।
निमित्तमात्रस्त्वं भूयाः कीर्तिमाप्स्यसि संगरे॥ ३८

—*—

## षष्ठोऽध्यायः

श्रीराम उवाच—

भगवन्नत्र मे चित्रं महदेतत्प्रजायते।
शुद्धस्फटिकसंकाशस्त्रिनेत्रश्चन्द्रशेखरः॥ १
मूर्तस्त्वं तु परिच्छिन्नाकृतिः पुरुषरूपधृक्।
अम्बया सहितोऽत्रैव रमसे प्रमथैः सह॥ २
त्वं कथं पञ्चभूतादि जगदेतच्चराच्चरम्।
तद्ब्रूहि गिरिजाकान्त यदि तेऽनुग्रहो मयि॥ ३

श्रीभगवान् उवाच—

शृणु राम महाभाग दुर्ज्ञेयममरैरपि।
तत्प्रवक्ष्यामि यत्नेन ब्रह्मचर्येण सुव्रत।
पारं यास्यत्यनासायाद्येन संसारनीरधेः॥ ४
दृश्यन्ते पञ्चभूतानि ये च लोकाश्चतुर्दश।
समुद्राः पर्वता देव राक्षसा ऋषयस्तथा॥ ५
दृश्यन्ते यानि चान्यानि स्थावराणि चराणि च।
गन्धर्वाः प्रमथा नागाः सर्वे ते मद्विभूतयः॥ ६

पुरा ब्रह्मादयो देवा द्रष्टुकामा ममाकृतिम्।
मन्दरं प्रययुः सर्वे मम प्रियतरं गिरिम्॥ ७
स्तुत्वा प्राञ्जलयो देवा मां तथा पुरतः स्थिताः।
तान्दृष्ट्वाथ मया देवाँल्लीलाकुलितचेतसः।
तेषामपहृतं ज्ञानं ब्रह्मादीनां दिवौकसाम्॥ ८
आसंस्तेऽसकृदज्ञाना मामाहुः को भवानिति।
अथाब्रुवमहं देवानहमेव पुरातनः॥ ९
आसं प्रथममेवाहं वर्तामि च सुरेश्वराः।
भविष्यामि च लोकेऽस्मिन्मत्तो नान्योऽस्ति कश्चन॥ १०
व्यतिरिक्तं च मत्तोस्ति नान्यत्किंचित्सुरेश्वराः।
नित्योऽनित्योऽहमनघो ब्रह्मणां ब्रह्मणस्पतिः॥ ११
दक्षिणाश्च उदञ्चोहं प्राञ्चः प्रत्यञ्च एव च।
अधश्चोर्ध्वं च विदिशो दिशश्चाहं सुरेश्वराः॥ १२
सावित्री चापि गायत्री स्त्री पुमानपुमानपि।
त्रिष्टुप् जगत्यनुष्टुप् च पङ्क्तिश्छन्दस्त्रयीमयः॥ १३
सत्योऽहं सर्वतः शान्तस्त्रेताग्निर्गौरवं गुरुः।
गौरवं गह्वरं चाहं द्यौरहं जगतां प्रभुः॥ १४
ज्येष्ठः सर्वसुरश्रेष्ठो वर्षिष्ठोऽहमपांपतिः।
आर्योऽहं भगवानीशस्तेजोऽहं चादिरप्यहम्॥ १५
ऋग्वेदोऽहं यजुर्वेदः सामवेदोऽहमात्मभूः।
अथर्वणश्च मन्त्रोहं तथा चाङ्गिरसो वरः॥ १६
इतिहासपुराणानि कल्पोऽहं कल्पवानहम्।
नाराशंसी च गाथाहं विद्योपनिषदोऽस्म्यहम्॥ १७

श्लोकाः सूत्राणि चैवाहमनुव्याख्यानमेव च।
व्याख्यानानि तथा विद्या इष्टं हुतमथाहुतिः ।। १८
दत्तादत्तमयं लोकः परलोकोऽहमक्षरः।
क्षरः सर्वाणि भूतानि दान्तिः शान्तिरहं खगः ।। १९
गुह्योऽहं सर्ववेदेषु आरण्योऽहमजोऽप्यहम्।
पुष्करं च पवित्रं च मध्यं चाहमतः परम्।
बहिश्चाहं तथा चान्तः पुरस्तादहमव्ययः ।। २०
ज्योतिश्चाहं तमश्चाहं तन्मात्राणीन्द्रियाण्यहम्।
बुद्धिश्चाहमहङ्कारो विषयाण्यहमेव हि ।। २१
ब्रह्मा विष्णुर्महेशोऽहमुमा स्कन्दो विनायकः।
इन्द्रोऽग्निश्च यमश्चाहं निर्ऋतिर्वरुणोऽनिलः ।। २२
कुबेरोऽहं तथेशानो भूर्भुवःस्वर्महर्जनः।
तपः सत्यं च पृथिवी चापस्तेजोऽनिलोऽप्यहम् ।। २३
आकाशोऽहं रविः सोमो नक्षत्राणि ग्रहाण्यहम्।
प्राणः कालस्तथा मृत्युरमृतं भूतमप्यहम्।। २४
भव्यं भविष्यत्कृत्स्नं च विश्वं सर्वात्मकोऽप्यहम्।
ओमादौ च तथा मध्ये भूर्भुवः स्वस्तथैव च।
ततोऽहं विश्वरूपोस्मि शीर्षं च जपतां सदा ।। १५
अशितं पायितं चाहं कृतं चाकृतमप्यहम्।
परं चैवापरं चाहमहं सूर्यः परायणः ।। २६
अहं जगद्धितं दिव्यमक्षरं सूक्ष्ममप्यहम्।
प्राजापत्यं पवित्रं च सौम्यमग्राह्यमग्रियम् ।। २७

अहमेवोपसंहर्ता महाग्रासौजसां निधिः ।
हृदये देवतात्वेन प्राणत्वेन प्रतिष्ठितः ।। २८
शिरश्चोत्तरतो यस्य पादौ दक्षिणतस्तथा ।
यस्य सर्वान्तरः साक्षादाकारोऽहं त्रिमात्रकः ।। २९
ऊर्ध्वमुन्नामये यस्मादधश्चापनयाम्यथ ।
तस्मादोङ्कार एवाहमेको नित्यः सनातनः ।। ३०
ऋचो यजूंषि सामानि यो ब्रह्मा यज्ञकर्मणि ।
प्रणामये ब्राह्मणेभ्यस्तेनाहं प्रणवो मतः ।। ३१
स्नेहो यथा मांसखण्डं व्याप्नोति व्यापयत्यपि ।
सर्वलोकानहं तद्वत्सर्वव्यापी ततोऽस्म्यहम् ।। ३२
ब्रह्मा हरिश्च भगवानाद्यन्तं नोपलब्धवान् ।
ततोऽन्ये च सुरा यस्मादनन्तोऽहमितीरितः ।। ३३
गर्भजन्मजरामृत्युसंसारभयसागरात् ।
तारयामि यतो भक्तं तस्मात्तारोऽहमीरितः ।। ३४
चतुर्विधेषु देहेषु जीवत्वेन वसाम्यहम् ।
सूक्ष्मो भूत्वाथ हृद्देशे यत्तत्सूक्ष्मः प्रकीर्तितः ।। ३५
महातमसि मग्नेभ्यो भक्तेभ्यो यत्प्रकाशये ।
विद्युद्वदतुलं रूपं तस्माद्वैद्युतमस्म्यहम् ।। ३६
एक एव यतो लोकान्विसृजामि सृजामि च ।
विवासयामि गृह्णामि तस्मादेकोऽहमीश्वरः ।। ३७
न द्वितीयो यतस्तस्थे तुरीयं ब्रह्म यत्स्वयम् ।
भूतान्यात्मनि संहृत्य चैको रुद्रो वसाम्यहम् ।। ३८

सर्वलोकान्यदीशेऽहमीशिनीभिश्च शक्तिभिः।
ईशानमस्य जगतः स्वर्दृशं चक्षुरीश्वरम्॥ ३९
ईशानमिन्द्र तस्थुषः सर्वेषामपि सर्वदा।
ईशानः सर्वविद्यानां यदीशानस्तदस्म्यहम्॥ ४०
सर्वान्भावान्निरीक्षेऽहमात्मज्ञानं निरीक्षये।
योगं च समये यस्माद्भगवान्महतो मतः॥ ४१
अजस्रं यच्च गृह्णामि विसृजामि सृजामि च।
सर्वाँल्लोकान्वासयामि तेनाहं वै महेश्वरः॥ ४२
महत्स्वात्मज्ञानयोगैरैश्वर्यैस्तु महीयते।
सर्वान्भावान्महादेवः सृजत्यवति सोऽस्म्यहम्॥ ४३
एषोऽस्मि देवः प्रदिशोऽपि सर्वाः पूर्वो हि जातोऽस्म्यहमेव गर्भे।
अहं हि जातश्च जनिष्यमाणः प्रत्यग्जनास्तिष्ठति सर्वतोमुखः॥ ४४
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्।
संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः॥ ४५
बालाग्रमात्रं हृदयस्य मध्ये विश्वेदेवं जातवेदं वरेण्यम्।
मामात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्॥ ४६
अहं योनिमधितिष्ठामि चैको मयेदं पूर्णं पञ्चविधं च सर्वम्।
मामीशानं पुरुषं देवमित्थं विचार्यमाणं शान्तिमत्यन्तमेति॥ ४७
प्राणेष्वन्तर्मनसो लिङ्गमाहुर्यस्मिन्नशनाया च तृष्णा क्षमा च।
तृष्णां छित्त्वा हेतुजालस्य मूलं बुद्ध्या चित्तं स्थापयित्वा मयीह।
एवं मां ये ध्यायमाना भजन्ते तेषां शान्तिः शाश्वती नेतरेषाम्॥ ३८
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्म मां ज्ञात्वा न बिभेति कुतश्चन॥ ४९

श्रुत्वेति देवा मद्वाक्यं कैवल्यज्ञानमुत्तमम्।
जपन्तो मम नामानि मम ध्यानपरायणाः ॥ ५०
सर्वे तु स्वस्वदेहान्ते मत्सायुज्यं गताः पुरा।
ततो ये परिदृश्यन्ते पदार्था मद्विभूतयः ॥ ५१
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम्।
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्॥ ५२
अणोरणीयानहमेव तद्वन्महानहं विश्वमहं विशुद्धः।
पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मि॥ ५३
अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स शृणोम्यकर्णः।
अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित्सदाहम्॥ ५४
वेदैरशेषैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्।
न पुण्यपापे मयि नास्ति नाशो न जन्म देहेन्द्रियबुद्धयश्च॥ ५५
न भूमिरापो न च वह्निरस्ति न चानिलो मेऽस्ति न मे नभश्च।
एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम्।
समस्तसाक्षिं सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम्॥ ५६
एवं मां तत्त्वतो वेत्ति यस्तु राम महामते।
स एव नान्यो लोकेषु कैवल्यफलमश्नुते॥ ५७

—*—

## सप्तमोऽध्यायः

श्रीराम उवाच—
भगवन्यन्मया पृष्टं तत्तथैव स्थितं विभो।
अत्रोत्तरं मया लब्धं त्वत्तो नैव महेश्वर॥ १

परिच्छिन्नपरीमाणे देहे भगवतस्तव।
उत्पत्तिः सर्वभूतानां स्थितिर्वा विलयः कथम्॥ २
स्वस्वाधिकारासंबद्धाः कथं नाम स्थिताः सुराः।
ते सर्वे त्वं कथं देव भुवनानि चतुर्दश॥ ३
त्वत्तः श्रुत्वापि देवात्र संदेहो मे महानभूत्।
अप्रत्यायितचित्तस्य संशयं छेत्तुमर्हसि॥ ४
श्री भगवान् उवाच—
वटबीजे सुसूक्ष्मेऽपि महावटतरुर्यथा।
सर्वदास्तेऽन्यथा वृक्षः कुत आयाति तद्वद।
तद्वन्मम तनौ राम भूतानामागतिर्लयः॥ ५
महासैन्धवपिण्डोऽपि जले क्षिप्तो विलीयते।
न दृश्यते पुनः पाकात्तत आयाति पूर्ववत्॥ ६
प्रातःप्रातर्यथा लोको जायते सूर्यमण्डलात्।
एवं मत्तो जगत्सर्वं जायतेऽस्ति विलीयते।
मय्येव सकलं राम तद्वज्जानीहि सुव्रत॥ ७
श्रीराम उवाच—
कथितेऽपि महाभाग दिग्जडस्य यथा दिशि।
निवर्तते भ्रमो नैव तद्वन्मम करोमि किम्॥ ८
श्रीभगवानुवाच—
मयि सर्वं यथा राम जगदेतच्चराचरम्।
वर्तते तद्दर्शयामि न द्रष्टुं क्षमते भवान्॥ ९
दिव्यं चक्षुः प्रदास्यामि तुभ्यं दशरथात्मज।
तेन पश्य भयं त्यक्त्वा मत्तेजोमण्डलं ध्रुवम्॥ १०

न चर्मचक्षुषा द्रष्टुं शक्यते मामकं महः ।
नरेण वा सुरेणापि तन्ममानुग्रहं विना ।। ११

श्री सूत उवाच—

इत्युक्त्वा प्रददौ तस्मै दिव्यं चक्षुर्महेश्वरः ।
अथादर्शयदेतस्मै वक्त्रं पातालसंनिभम् ।। १२
विद्युत्कोटिप्रतीकाशमतिभीमभयावहम् ।
तद्दृष्ट्वैव भयाद्रामो जानुभ्यामवनिं गतः ।। १३
प्रणम्य दण्डवद्भूमौ तुष्टाव च पुनः पुनः ।
अथोत्थाय महावीरो यावद्देव प्रपश्यति ।। १४
वक्त्रं पुरभिदस्तावदन्तर्ब्रह्माण्डकोटयः ।
चटका इव लक्ष्यन्ते ज्वालामालासमाकुलाः ।। १५
मेरुमन्दरविन्ध्याद्या गिरयः सप्तसागराः ।
दृश्यन्ते चन्द्रसूर्याद्याः पञ्चभूतानि ते सुराः ।। १६
अरण्यानि महानागा भुवनानि चतुर्दश ।
प्रतिब्रह्माण्डमेवं तु दृष्ट्वा दशरथात्मजः ।। १७
सुरासुराणां संग्रामांस्तत्र पूर्वापरानपि ।
विष्णोर्दशावतारांश्च तत्कर्तव्यान्यपि द्विजाः ।। १८
पराभवांश्च देवानां पुरदाहं महेशितुः ।
उत्पद्यमानानुत्पन्नान्सर्वानपि विनश्यतः ।। १९
दृष्ट्वा रामो भयाविष्टः प्रणनाम मुहुर्मुहुः ।
उत्पन्नतत्त्वज्ञानोऽपि बभूव रघुनन्दनः ।। २०
अथोपनिषदां सारैरर्थैस्तुष्टाव शङ्करम् ।। २१

श्रीराम उवाच—

देव प्रपन्नार्तिहर प्रसीद प्रसीद विश्वेश्वर विश्ववन्द्य।
प्रसीद गङ्गाधर चन्द्रमौले मां त्राहि संसारभयादनाथम्॥ २२
त्वत्तो हि जातं जगदेतदीश त्वय्येव भूतानि वसन्ति नित्यम्।
त्वय्येव शम्भो विलयं प्रयान्ति भूमौ यथा वृक्षलतादयोऽपि॥ २३
ब्रह्मेन्द्ररुद्राश्च मरुद्गणाश्च गन्धर्वयक्षासुरसिद्धसङ्घाः।
गङ्गादिनद्यो वरुणालयाश्च वसन्ति शूलिंस्तव वक्त्रमन्ति॥ २४
त्वन्मायया कल्पितमिन्दुमौले त्वय्येव दृश्यत्वमुपैति विश्वम्।
भ्रान्त्या जनः पश्यति सर्वमेतच्छुक्तौ यथा रूप्यमहिं च रज्जौ॥ २५
तेजोभिरापूर्य जगत्समग्रं प्रकाशमानः कुरुषे प्रकाशम्।
विना प्रकाशं तव देवदेव न दृश्यते विश्वमिदं क्षणेन॥ २६
अल्पाश्रयो नैव बृहन्तमर्थं धत्तेऽणुरेको नहि विन्ध्यशैलम्।
तद्वक्त्रमात्रे जगदेतदस्ति त्वन्माययैवेति च निश्चिनोमि॥ २७
रज्जौ भुजङ्गो भयदो यथैव न जायते नास्ति न चैति नाशम्।
त्वन्मायया केवलमात्तरूपं तथैव विश्वं त्वयि नीलकण्ठ॥ २८
विचार्यमाणे तव यच्छरीरमाधारभावं जगतामुपैति।
तदप्यवश्यं मदविद्ययैव पूर्णश्चिदानन्दमयो यतस्त्वम्॥ २९
पूजेष्टपूर्तादिवरक्रियाणां भोक्तुः फलं यच्छसि शस्तमेव।
मृषैतदेवं वचनं पुरारे त्वत्तोऽस्ति भिन्नं न च किंचिदेव॥ ३०
अज्ञानमूढा मुनयो वदन्ति पूजोपचारादिबहिःक्रियाभिः।
तोषं गिरीशो भजतीति मिथ्या कुतस्त्वमूर्तस्य तु भोगलिप्सा॥ ३१
किञ्चिद्दलं वा चुलकोदकं वा यत्त्वं महेश प्रतिगृह्य दत्से।
त्रैलोक्यलक्ष्मीमपि तज्जनेभ्यः सर्वं त्वविद्याकृतमेव मन्ये॥ ३२

व्याप्नोषि सर्वा विदिशो दिशश्च त्वं विश्वमेकः पुरुषः पुराणः ।
नष्टेऽपि तस्मिंस्तव नास्ति हानिर्घटे विनष्टे नभसो यथैव ।। ३३
यथैकमाकाशगमर्कबिम्बं क्षुद्रेषु पात्रेषु जलान्वितेषु ।
भजत्यनेकप्रतिबिम्बभावं तथा त्वमन्तःकरणेषु देव ।। ३४
सुसर्जने वाप्यवने विनाशे विश्वस्य किंचित्तव नास्ति कार्यम् ।
अनादिभिर्देहभृतामदृष्टैस्तथापि तत्स्वप्रवदातनोषि ।। ३५
स्थूलस्य सूक्ष्मस्य जडस्य देहद्वयस्य शम्भो न चिदं विनास्ति ।
अतस्त्वदारोपणमातनोति श्रुतिः पुरारे सुखदुःखयोः सदा ।। ३६
नमः सच्चिदम्भोधिहंसाय तुभ्यं नमः कालकण्ठाय कालात्मकाय ।
नमस्ते समस्ताघसंहारकर्त्रे नमस्ते मृषाचित्तवृत्त्यैकभोक्त्रे ।। ३७

सूत उवाच—

एवं प्रणम्य विश्वेशं पुरतः प्राञ्जलिः स्थितः ।
विस्मितः परमेशानं जगदे रघुनन्दनः ।। ३८

श्रीराम उवाच—

उपसंहर विश्वात्मन्विश्वरूपमिदं तव । ३९

श्रीभगवान् उवाच—

पश्य राम महाबाहो मत्तो नान्योऽस्ति कश्चन ।
इत्युक्त्वैवोपसंजह्रे स्वदेहे देवतादिकान् ।। ४०
मीलिताक्षः पुनर्हर्षाधावद्रामः प्रपश्यति ।
तावदेव गिरेः शृङ्गे व्याघ्रचर्मोपरि स्थितम् ।। ४१
ददर्श पञ्चवदनं नीलकण्ठं त्रिलोचनम् ।
व्याघ्रचर्माम्बरधरं भूतिभूषितविग्रहम् ।। ४२

फणिकङ्कणभूषाढ्यं नागयज्ञोपवीतिनम्।
व्याघ्रचर्मोत्तरीयं च विद्युत्पिङ्ग जटाधरम्।। ४३
एकाकिनं चन्द्रमौलिं वरेण्यमभयप्रदम्।
चतुर्भुजं खण्डपरशुं मृगहस्तं जगत्पतिम्।। ४४
अथाज्ञया पुरस्तस्य प्रणम्योपविवेश सः।
अथाह रामं देवेशो यद्यत्प्रष्टुमभीच्छसि।
तत्सर्वं पृच्छ राम त्वं मत्तो नान्योऽस्ति ते गुरुः।। ४५

—*—

## अष्टमोऽध्यायः

**श्रीराम उवाच—**

पाञ्चभौतिकदेहस्य चोत्पत्तिर्विलयः स्थितिः।
स्वरूपं च कथं देहे भगवन्वक्तुमर्हसि।। १

**श्री भगवान् उवाच—**

पञ्चभूतैः समारब्धो देहोऽयं पाञ्चभौतिकः।
तत्र प्रधानं पृथिवी शेषाणां सहकारिता।। २
जरायुजोऽण्डजश्चैव स्वेदजश्चोद्भिदस्तथा।
एवं चतुर्विधः प्रोक्तो देहोऽयं पाञ्चभौतिकः।। ३
मानसस्तु परः प्रोक्तो देवानामेव स स्मृतः।
तत्र वक्ष्ये प्रथमतः प्रधानत्वाज्जरायुजम्।। ४
शुक्रशोणितसंभूतवृत्तिरेव जरायुजः।
स्त्रीणां गर्भाशये शुक्रमृतुकाले विशेषदा।
रजसा योषितो युक्तं तदेव स्याज्जरायुजम्।। ५

बाहुल्याद्रजसः स्त्री स्याच्छुक्राधिक्ये पुमान्भवेत्।
शुक्रशोणितयोः साम्ये जायतेऽथ नपुंसकः ॥ ६
ऋतुस्नाता भवेन्नारी चतुर्थदिवसे ततः ।
ऋतुकालस्तु निर्दिष्ट आषोडशदिनावधि ॥ ७
तत्रायुग्मदिने स्त्री स्यात्पुमान्युग्मदिने भवेत् ॥ ८
षोडशे दिवसे गर्भो जायते यदि सुभ्रुवः ।
चक्रवर्ती तदा राजा जायते स न संशयः ॥ ९
ऋतुस्नाता यस्य पुंसः साकाङ्क्षं मुखमीक्षते ।
तदाकृतिर्भवेद्गर्भस्तत्पश्येत्स्वामिनो मुखम् ॥ १०
या स्त्रीचर्मावृतिः सूक्ष्मा जरायुः सा निगद्यते ।
शुक्रशोणितयोर्योगस्तस्मिन्नेव भवेद्यतः ।
तत्र गर्भो भवेद्यस्मात्तेन प्रोक्तो जरायुजः ॥ ११
अण्डजाः पक्षिसर्पाद्याः स्वेदजा मशकादयः ।
उद्भिज्जा वृक्षगुल्माद्या मानसाश्च सुरर्षयः ॥ १२
जन्मकर्मवशादेव निषिक्तं स्मरमन्दिरे ।
शुक्ररजःसमायुक्तं प्रथमे मासि तद्द्रवम् ॥ १३
बुद्बुदं कललं तस्मात्ततः पेशी भवेदिदम् ।
पेशीघनं द्वितीये तु मासि पिण्डः प्रजायते ॥ १४
कराङ्घ्रिशीर्षकादीनि तृतीये संभवन्ति हि ।
अभिव्यक्तिश्च जीवस्य चतुर्थे मासि जायते ॥ १५
ततश्चलति गर्भोऽपि जनन्या जठरे स्वतः ।
पुत्रश्चेद्दक्षिणे पार्श्वे कन्या वामे च तिष्ठति ॥ १६

नपुंसकस्तूदरस्य भागस्तिष्ठति मध्यमे ।
अतो दक्षिणपार्श्वे तु शेते माता पुमान्यदि ।। १७
अङ्गप्रत्यङ्गभागाश्च सूक्ष्माः स्युर्युगपत्तदा ।
विहाय श्मश्रुदन्तादीन् जन्मानन्तर संभवान् ।। १८
चतुर्थे व्यक्तता तेषां भावानामपि जायते ।
पुंसां स्थैर्यादयो भावा भूतत्वाद्यास्तु योषिताम् ।। १९
नपुंसके च ते मिश्रा भवन्ति रघुनन्दन ।
मातृजं चास्य हृदयं विषयानभिकाङ्क्षति ।। २०
तता मातुर्मनोऽभीष्टं कुयाद्गर्भविवृद्धये ।
तां च द्विहृदयां नारीमाहुर्दौहृदिनीं ततः ।। २१
अदानाद्दोहदानां स्युर्गर्भस्य व्यङ्गतादयः ।
मातुर्यद्विषये लोभस्तदार्तो जायते सुतः ।।२२
प्रबुद्धं पञ्चमे चित्तं मांसशोणितपुष्टता ।
षष्ठेऽस्थिस्नायुनखरकेशलोमविविक्तता ।। २३
वलवर्णौ चोपचितौ सप्तमे त्वङ्गपूर्णता ।
पादान्तरितहस्ताभ्यां श्रोत्ररन्ध्रे पिधाय सः ।। २४
उद्विग्नो गर्भसंवासादस्ति गर्भभयान्वितः ।। २५
आविर्भूतप्रबोधोऽसौ गर्भदुःखादिसंयुतः ।
हा कष्टमिति निर्विण्णः स्वात्मानं शोशुचीत्यथ ।। २६
अनुभूता महासह्याः पुरा मर्मच्छिदोऽसकृत् ।
करम्भवालुकातप्ताश्चादहन्तासुखाशयाः ।। २७
जठरानलसंतप्तपित्ताख्यरसविप्रुषः ।
गर्भाशये निमग्नं तु दहन्त्यतिभृशं हि माम् ।। २८

उदर्यकृमिवक्त्राणि कूट शाल्मलिकण्ट कैः ।
तुल्यानि च तुदन्त्यार्तं पार्श्वास्थिक्रकचार्दितम्।। २९
गर्भे दुर्गन्धभूयिष्ठे झठ राग्निप्रदीपिते।
दुःखं मयाप्तं यत्त स्मात्कनीयः कुम्भपाकजम्।। ३०
पूयासृक्श्लेष्मपायित्वं वान्ताशित्वं च यद्भवेत्।
अशुचौ कृमिभावश्च तत्प्राप्तं गर्भशायिना।। ३१
गर्भशय्यां समारुह्य दुःखं यादृङ् मयापि तत्।
नातिशेते महादुःखं निःशेषनरकेषु तत्।। ३२
एवं स्मरन्पुरा प्राप्ता नानाजातीश्च यातनाः ।
मोक्षोपायमभिध्यायन्वर्ततेऽभ्यासतत्परः ।। ३३
अष्ट मे त्वक्सृती स्यातामोजस्तेजश्च हृद्भवम्।
शुभ्रमापीतरक्तं च निमित्तं जीविते मतम्।। ३४
मातरं च पुनर्गर्भं चञ्चलं तत्प्रधावति।
ततो जातोऽष्ट मे मासि न जीवत्योजसोज्झितः ।। ३५
किञ्चित्कालमवस्थानं संस्कारात्पीडि ताङ्गवत्।
समयः प्रसवस्य स्यान्मासेषु नवमादिषु।। ३६
मातुरस्रवहां नाडीमाश्रित्यान्ववतारिता।
नाभिस्थनाडी गर्भस्य मात्राहाररसावहा।
तेन जीवति गर्भोपि मात्राहारेण पोषितः ।। ३७
अस्थियन्त्रविनिष्पिष्ट : पतितः कुक्षिवर्त्मना।
मेदोऽसृग्दिग्धसर्वाङ्गो जरायुपुट संवृतः ।। ३८
निष्क्रामन्भृशदुःखार्तो रुदन्नुच्चैरधोमुखः ।
यन्त्रादेवं विनिर्मुक्तः पतत्युत्तानशाय्युत।। ३९

अकिञ्चित्कस्तदा लोकैर्मांसपेशीवदास्थितः ।
श्वमार्जारादिदंष्ट्रिभ्यो रक्ष्यते दण्डपाणिभिः ।। ४०
पितृवद्राक्षसं वेत्ति मातृवड्डाकिनीमपि ।
पूयं पयोवदज्ञानाद्दीर्घकष्टं तु शैशवम् ।। ४१
श्लेष्मणा पिहिता नाडी सुषुम्ना यावदेव हि ।
व्यक्तवर्णं च वचनं तावद्वक्तुं न शक्यते ।। ४२
अत एव च गर्भेऽपि रोदितुं नैव शक्यते ।। ४३
दृप्तोऽथ यौवनं प्राप्य मन्मथज्वरविह्वलः ।
गायत्यकस्मादुच्चैस्तु तथाकस्माच्च वल्गति ।। ४४
आरोहति तरून्वेगाच्छान्तानुद्वेजयत्यपि ।
कामक्रोधमदान्धः सन् न कांश्चिदपि वीक्षते ।। ४५
अस्थिमांसशिरालाया वामाया मन्मथालये ।
उत्तानपूतिमण्डूकपाटितोदरसंनिभे ।
आसक्तः स्मरबाणार्त आत्मना दह्यते भृशम् ।। ४६
अस्थिमांसशिरात्वग्भ्यः किमन्यद्वर्तते वपुः ।
वामानां मायया मूढो न किंचिद्वीक्षते जगत् ।। ४७
निर्गते प्राणपवने देहो हन्त मृगीदृशः ।
यथाहि जायते नैव वीक्ष्यते पञ्चषैर्दिनैः ।। ४८
महापरिभवस्थानं जरां प्राप्यातिदुःखितः ।
श्लेष्मणा पिहितोरस्को जग्धमन्नं न जीर्यते ।। ४९
सन्नदन्तो मन्ददृष्टिः कटुतिक्तकषायभुक् ।
वातभुग्नकटिग्रीवाकरोरुचरणोऽबलः ।। ५०

गदायुतसमाविष्टः परिभूतः स्वबन्धुभिः ।
निःशौचो मलदिग्धाङ्ग आलिङ्गितवरोषितः ।। ५१

ध्यायन्नसुलभान्भोगान्केवलं वर्तते चलः ।
सर्वेन्द्रियक्रियालोपाद्धास्यते बालकैरपि ।। ५२

ततो मृतिजदुःखस्य दृष्टान्तो नोपलभ्यते ।
यस्माद्बिभ्यति भूतानि प्राप्तान्यपि परां रुजम् ।। ५३

नीयते मृत्युना जन्तुः परिष्वक्तोऽपि बन्धुभिः ।
सागरान्तर्जलगतो गरुडेनेव पन्नगः ।। ५४

हा कान्ते हा धनं पुत्राः क्रन्दमानं सुदारुणम् ।
मण्डूक इव सर्पेण मृत्युना नीयते नरः ।। ५५

मर्मसून्मथ्यमानेषु मुच्यमानेषु संधिषु ।
यद्दुःखं म्रियमाणस्य स्मर्यतां तन्मुमुक्षुभिः ।। ५६

दृष्टावाक्षिप्यमाणायां संज्ञया म्रियमाणया ।
मृत्युपाशेन बद्धस्य त्राता नैवोपलभ्यते ।। ५७

संरुध्यमानस्तमसा महच्चित्तमिवाविशन् ।
उपाहूतस्तदा ज्ञातीनीक्षते दीनचक्षुषा ।। ५८

अयःपाशेन कालेन स्नेहपाशेन बन्धुभिः ।
आत्मानं कृष्यमाणं तमीक्षते परितस्तथा ।। ५९

हिक्कया बाध्यमानस्य श्वासेन परिशुष्यतः ।
मृत्युना कृष्यमाणस्य न खल्वस्ति परायणम् ।। ६०

संसारयन्त्रमारूढो यमदूतैरधिष्ठितः ।
क्व यास्यामीति दुःखार्तः कालपाशेन योजितः ।। ६१

किं करोमि क गच्छामि किं गृह्णामि त्यजामि किम्।
इतिकर्तव्यतामूढः कृच्छ्राद्देहात्त्यजत्यसून्॥ ६२
यातनादेहसंबद्धो यमदूतैरधिष्ठितः।
इतो गत्वानुभवति या यास्ता यमयातनाः।
तासु यल्लभते दुःखं तद्वक्तुं सहते कुतः॥ ६३
कर्पूरचन्दनाद्यैस्तु लिप्यते सततं हि यत्।
भूषणैर्भूष्यते चित्रैः सुवस्त्रैः परिवार्यते॥ ६४
अस्पृश्यं जायतेऽप्रेक्ष्यं जीवत्यक्तं सदा वपुः।
निष्कासयन्ति निलयात्क्षणं न स्थापयन्त्यपि॥ ६५
दह्यते च ततः काष्ठैस्तद्भस्म क्रियते क्षणात्।
भक्ष्यते वा सृगालेन गृध्रकुक्कुरवायसैः।
पुनर्न दृश्यते सोऽथ जन्मकोटिशतैरपि॥ ६६
माता पिता गुरुजनः स्वजनो ममेति
प्रायोपमे जगति कस्य भवेत्प्रतिज्ञा।
एको यतो व्रजति कर्मपुरःसरोऽयं
विश्रामवृक्षसदृशः खलु जीवलोकः॥ ६७
सायं सायं वासवृक्षं समेताः प्रातःप्रातस्तेन तेन प्रयान्ति।
त्यक्त्वान्योन्यं तं च वृक्षं विहङ्गा यद्वत्तद्वज्ज्ञातयोऽज्ञातयश्च॥ ६८
मृतिबीजं भवेज्जन्म जन्मबीजं भवेन्मृतिः।
घटयन्त्रवदश्रान्तो बंभ्रमीत्यनिशं नरः॥ ६९
गर्भे पुंसः शुक्रपाताद्यदुक्तं मरणावधि।
तदेतस्य महाव्याधेर्मत्तो नान्योऽस्ति भेषजम्॥ ७०

—*—

## नवमोध्यायः

श्री भगवान् उवाच—

देहस्वरूपं वक्ष्यामि शृणुष्वावहितो नृप।
मत्तो हि जायते विश्वं मयैवैतत्प्रधार्यते।
मय्येवेदमधिष्ठाने लीयते शुक्तिरौप्यवत्॥ १
अहं तु निर्मलः पूर्णः सच्चिदानन्दविग्रहः।
असङ्गो निरहङ्कारः शुद्धं ब्रह्म सनातनम्॥ २
अनाद्यविद्यायुक्तः सन् जगत्कारणतां व्रजे॥ ३
अनिर्वाच्या महाऽविद्या त्रिगुणा परिणामिनी।
रजः सत्वं तमश्चेति तद्गुणाः परिकीर्तिताः॥ ४
सत्वं शुक्लं समादिष्टं सुखज्ञानास्पदं नृणाम्।
दुःखास्पदं रक्तवर्णं चञ्चलं च रजो मतम्। ५
तमः कृष्णं जडं प्रोक्तमुदासीनं सुखादिषु। ६
अतो मम समायोगाच्छक्तिः सा त्रिगुणात्मिका।
अधिष्ठाने च मय्येव भजते विश्वरूपताम्।
शुक्तौ रजतवद्रज्जौ भुजङ्गो यद्वदेव तु॥ ७
आकाशादीनि जायन्ते मत्तो भूतानि मायया।
तैरारब्धमिदं सर्वं देहोऽयं पाञ्चभौतिकः॥ ८
पितृभ्यामशितादन्नात्षट्कोशं जायते वपुः।
स्नायवोऽस्थीनि मज्जा च जायन्ते पितृतस्तथा॥ ९
त्वङ्मांसशोणितमिति मातृतश्च भवन्ति हि।
भावाः स्युः षड्विधास्तस्य मातृजाः पितृजास्तथा।
रसजा आत्मजाः सप्त संभूताः स्वात्मजास्तथा॥ १०

मृदवः शोणितं मेदो मज्जा प्लीहा यकृद्गुदम्।
हृन्नाभीत्येवमाद्याः स्युर्भावा मातृभवा मताः ॥ ११
श्मश्रुरोमकचस्नायुशिराधमनयो नखाः।
दशनाः शुक्रमित्यादिस्थिराः पितृसमुद्भवाः ॥ १२
शरीरोपचितिर्वर्णो वृद्धिस्तृप्तिर्बलं स्थितिः।
अलोलुपत्वमुत्साह इत्यादीन्रसजान्विदुः ॥ १३
इच्छा द्वेषः सुखं दुःखं धर्माधर्मौ च भावना।
प्रयत्नो ज्ञानमायुश्चेन्द्रियाणीत्येवमात्मजाः ॥ १४
ज्ञानेन्द्रियाणि श्रवणं स्पर्शनं दर्शनं तथा।
रसनं घ्राणमित्याहुः पञ्च तेषां च गोचराः ॥ १५
शब्दः स्पर्शस्तथा रूपं रसो गन्ध इति क्रमात्।
वाक्करांघ्रि गुदोपस्थान्याहुः कर्मेन्द्रियाणि हि ॥ १६
वचनादानगमनविसर्गरतयः क्रमात्।
कर्मेन्द्रियाणां जानीयान्मनश्चैवोभयात्मकम् ॥ १७
क्रियास्तेषां मनो बुद्धिरहङ्कारस्ततः परम्।
अन्तःकरणमित्याहुश्चित्तं चेति चतुष्टयम् ॥ १८
सुखं दुःखं च विषयौ विज्ञेयौ मनसः क्रियाः।
स्मृति भीतिविकल्पाद्या बुद्धिः स्यान्निश्चयात्मिका।
अहं ममेत्यहङ्कारश्चित्तं चेतयते यतः ॥ १९
सत्वाख्यमन्तःकरणं गुणभेदात्त्रिधा मतम्।
सत्वं रजस्तम इति गुणाः सत्वात्तु सात्विकाः ॥ २०
आस्तिक्यशुद्धिधर्मैकरुचिप्रभृतयो मताः।
रजसो राजसा भावाः कामक्रोधमदादयः ॥ २१

निद्रालस्यप्रमादादिवञ्चनाद्यास्तु तामसाः ।
प्रसन्नेन्द्रियतारोग्यानालस्याद्यास्तु सत्वजाः ।। २२
देहो मात्रात्मकस्तस्मादादत्ते सद्गुणानिमान् ।
शब्दः श्रोत्रं मुखरता वैचित्र्यं सूक्ष्मता धृतिः ।। २३
बलं च गगनाद्वायोः स्पर्शश्च स्पर्शनेन्द्रियम् ।
उत्क्षेपणमपक्षेपाकुञ्चने गमनं तथा ।। २४
प्रसारणमितीमानि पञ्च कर्माणि रूक्षता ।
प्राणापानौ तथा व्यानसमानोदानसंज्ञकान् ।। २५
नागं कूर्मं च कृकलं देवदत्तं धनञ्जयम् ।
दशैता वायुविकृतीस्तथा गृह्णाति लाघवम् ।। २६
तेषां मुख्यतरः प्राणो नाभेः कण्ठादवस्थितः ।
चरत्यसौ नासिकयोर्नाभौ हृदयपङ्कजे ।। २७
शब्दोच्चारणनिश्वासोच्छ्वासादेरपि कारणम् ।। २८
अपानस्तु गुदे मेढ्रे कटिजङ्घोदरेष्वपि ।
नाभिकण्ठे वङ्क्षणयोरूरुजानुषु तिष्ठति ।
तस्य मूत्रपुरीषादिविसर्गः कर्म कीर्तितम् ।। २९
व्यानोऽक्षिश्रोत्रगुल्फेषु जिह्वा घ्राणेषु तिष्ठति ।
प्राणायामधृतित्यागग्रहणाद्यस्य कर्म च ।। ३०
समानो व्याप्य निखिलं शरीरं वह्निना सह ।
द्विःसप्ततिसहस्रेषु नाडीरन्ध्रेषु संचरन् ।। ३१
भुक्तपीतरसान्सम्यगानयन्देहपुष्टिकृत् ।
उदानः पादयोरास्ते हस्तयोरङ्गसन्धिषु ।। ३२

कर्मास्य देहोन्नयनोत्क्रमणादि प्रकीर्तितम्।
त्वगादिधातूनाश्रित्य पञ्च नागादयः स्थिताः ।। ३३
उद्गारादि निमेषादि क्षुत्पिपपासदिकं क्रमात्।
तन्द्री प्रकृतिशोकादि तेषां कर्म प्रकीर्तितम्।। ३४
अग्नेस्तु रोचकं रूपं दीप्तं पाकं प्रकाशताम्।
अमर्षतीक्ष्णसूक्ष्माणामोजस्तेजस्तु शूरताम्।। ३५
मेधावितां तथा दत्ते जलात्तु रसनं रसम्।
शैत्यं स्नेहं द्रवं स्वेदं गात्रादिमृदुतामपि।। ३६
भूमेर्घ्राणेन्द्रियं गन्धं स्थैर्यं धैर्यं च गौरवम्।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः।। ३७
अन्नं पुंसाशितं त्रेधा जायते जठराग्निना।
मलं स्थविष्ठो भागः स्यान्मध्यमो मांसतां व्रजेत्।
मनः कनिष्ठो भागः स्यात्तस्मादन्नमयं मनः ।। ३८
अपां स्थविष्ठो मूत्रं स्यान्मध्यमो रुधिरं भवेत्।
कनिष्ठभागः प्राणः स्यात्तस्मात्प्राणो जलात्मकः ।। ३९
तेजसोऽस्थि स्थविष्ठः स्यान्मज्जामध्यसमुद्भवः।
कनिष्ठा वाङ्मता तस्मात्तेजोऽबन्नात्मकं जगत्।। ४०
लोहिताज्जायते मांसं मेदो मांससमुद्भवम्।
मेदसोऽस्थीनि जायन्ते मज्जा वास्थिसमुद्भवः ।। ४१
नाड्योऽपि मांससंघाताच्छुक्रं मज्जासमुद्भवम्।। ४२
वातपित्तकफाश्चात्र धातवः परिकीर्तिताः।
दशाञ्जलि जलं ज्ञेयं रसस्याञ्जलयो नव।। ४३

रक्तस्याष्टौ पुरीषस्य सप्त हि श्लेष्मणश्च षट्।
पित्तस्य पञ्च चत्वारो मूत्रस्याञ्जलयस्त्रयः ॥ ४४
वसाया मेदसो द्वौ तु मज्जा त्वञ्जलिसंमितः।
अर्धाञ्जलि तथा शुक्रं तदेव बलमुच्यते ॥ ४५
अस्थ्नां शरीरे संख्या स्यात्षष्टियुक्तं शतत्रयम्।
जलजानि कपालानि रुचकास्तरणानि च।
नलकानीति तान्याहुः पञ्चधाऽस्थीनि सूरयः ॥ ४६
द्वे शते त्वस्थिसंधीनां स्यातां तत्र दशोत्तरे।
रौरवाः प्रसराः स्कन्धसेचनाः स्युरुलूखलाः ॥ ४७
समुद्गा मण्डलाः शङ्खावर्ता वामनकुण्डलाः।
इत्यष्टधा समुद्दिष्टाः शरीरेष्वस्थिसन्धयः ॥ ४८
सार्धकोटित्रयं रोम्णां श्मश्रुकेशास्त्रिलक्षकाः।
देहस्वरूपमेवं ते प्रोक्तं दशरथात्मज।
यस्मादसारो नास्त्येव पदार्थो भुवनत्रये ॥ ४९
देहेऽस्मिन्नभिमानेन न महोपायबुद्धयः।
अहङ्कारेण पापेन क्रियन्ते हन्त साम्प्रतम् ॥ ५०
तस्मादेतत्स्वरूपं तु विबोद्धव्यं मनीषिणा ॥ ५१

—*—

## दशमोऽध्यायः

श्रीराम उवाच—
भगवन्नत्र जीवोऽसौ जन्तोर्देहेऽवतिष्ठते।
जायते वा कुतो जीवः स्वरूपं वास्य किं वद ॥ १

देहान्ते वा कुत्र याति गत्वा वा कुत्र तिष्ठति।
कथमायाति वा देहं पुनर्नायाति वा वद॥ २

श्री भगवानुवाच—

साधु पृष्टं महाभाग गुह्याद्गुह्यतमं हि यत्।
देवैरपि सुदुर्ज्ञेयमिन्द्राद्यैर्वा महर्षिभिः॥ ३
अन्यस्मै नैव वक्तव्यं मयापि रघुनन्दन।
त्वद्भक्त्याहं परं प्रीतो वक्ष्याम्यवहितः शृणु॥ ४
सत्यज्ञानात्मकोऽनन्तः परमानन्दविग्रहः।
परमात्मा परं ज्योतिरव्यक्तो व्यक्तकारणम्॥ ५
नित्यो विशुद्धः सर्वात्मा निर्लेपोऽहं निरञ्जनः।
सर्वधर्मविहीनश्च न ग्राह्यो मनसापि च॥ ६
नाहं सर्वेन्द्रियग्राह्यः सर्वेषां ग्राहको ह्यहम्।
ज्ञाताहं सर्वलोकस्य मम ज्ञाता न विद्यते॥ ७
दूरः सर्वविकाराणां परमाण्वादिकस्य च॥ ८
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्म मां ज्ञात्वा न बिभेति कुतश्चन॥ ९
यस्तु सर्वाणि भूतानि मय्येवेति प्रपश्यति।
मां च सर्वेषु भूतेषु ततो न विजुगुप्सते॥ १०
यस्य सर्वाणि भूतानि ह्यात्मैवाभूद्विजानतः।
को मोहस्तत्र कः शोक एकत्वमनुपश्यतः॥ ११
एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः॥ १२

अनाद्यविद्यया युक्तस्तथाप्येकोऽहमव्ययः ।
अव्याकृतब्रह्मरूपो जगत्कर्ता महेश्वरः ।। १३
ज्ञानमात्रे यथा दृश्यमिदं स्वप्ने जगत्त्रयम् ।
तद्वन्मयि जगत्सर्वं दृश्यतेऽस्ति विलीयते ।। १४
नानाविद्यासमायुक्तो जीवत्वेन वसाम्यहम् ।
पञ्च कर्मेन्द्रियाण्येव पञ्च ज्ञानेन्द्रियाणि च ।
मनो बुद्धिरहङ्कारश्चित्तं चेति चतुष्टयम् ।। १५
वायवः पञ्च मिलिता यान्ति लिङ्गशरीरताम् ।। १६
तत्राविद्यासमायुक्तं चैतन्यं प्रतिबिम्बितम् ।
व्यावहारिकजीवस्तु क्षेत्रज्ञः पुरुषोऽपि वा ।। १७
स एव जगतां भोक्ता नाद्ययोः पुण्यपापयोः ।
इहामुत्र गती तत्र जाग्रत्स्वप्नादिभोक्तृता ।।१८
यथा दर्पणकालिम्ना मलिनं दृश्यते मुखम् ।
तद्वदन्तःकरणगैर्दोषैरात्मापि दृश्यते ।। १९
परस्पराध्यासवशात्स्यादन्तः करणात्मनोः ।
एकीभावाभिमानेन परात्मा दुःखभागिव ।। २०
मरुभूमौ जलत्वेन मध्याह्नार्कमरीचिकाः ।
दृश्यन्ते मूढचित्तस्य न ह्यार्द्रास्तापकारकाः ।। २१
तद्वदात्मापि निर्लेपो दृश्यते मूढचेतसाम् ।
स्वाविद्यात्मात्मदोषेण कर्तृत्वादिकधर्मवान् ।। २२
तत्र चान्नमये पिण्डे हृदि जीवोऽवतिष्ठते ।
आनखाग्रं व्याप्य देहं तद्ब्रुवेऽवहितः शृणु ।
सोऽयं तदभिमानेन मांसपिण्डो विराजते ।। २३

नाभेरूर्ध्वमधः कण्ठाद्व्याप्य तिष्ठति यत्सदा।
तस्य मध्येऽस्ति हृदयं सनालं पद्मकोशवत्।। २४
अधोमुखं च तत्रास्ति सूक्ष्मं सुषिरमुत्तमम्।
दहराकाशमित्युक्तं तत्र जीवोऽवतिष्ठते।। २५
वालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते।। २६
कदम्बकुसुमोद्बद्धकेशरा इव सर्वतः।
प्रसृता हृदयान्नाड्यो याभिर्व्याप्तं शरीरकम्।। २७
हितं बलं प्रयच्छन्ति तस्मात्तेन हिताः स्मृताः।
द्वासप्ततिसहस्रैस्ताः संख्याता योगवित्तमैः।। २८
हृदयात्तास्तु निष्क्रान्ता यथार्काद्रश्मयस्तथा।
एकोत्तरशतं तास्तु मुख्या विष्वग्विनिर्गताः।। २९
वहन्त्यम्भो यथा नद्यो नाड्यः कर्मफलं तथा।
अनन्तैकोर्ध्वगा नाडी मूर्धपर्यन्तमञ्जसा।। ३०
प्रतीन्द्रियं दश दश निर्गता विषयोन्मुखाः।
नाड्यः शर्मादिहेतुत्वात्स्वप्नादिफलभुक्तये।। ३१
सुषुम्नेति समादिष्टा तया गच्छन्विमुच्यते।
तयोपहितचैतन्यं जीवात्मानं विदुर्बुधाः।। ३२
यथा राहुरदृश्योऽपि दृश्यते चन्द्रमण्डले।
तद्वत्सर्वगतोऽप्यात्मा लिङ्गदेहेऽपि दृश्यते।। ३३
दृश्यमाने यथा कुम्भे घटाकाशोऽपि दृश्यते।
तद्वत्सर्वगतोऽप्यात्मा लिङ्गदेहेऽपि दृश्यते।। ३४

निश्चलः परिपूर्णोऽपि गच्छतीत्युपचर्यते।
जाग्रत्काले यथा ज्ञेयमभिव्यक्त विशेषधीः ॥ ३५
व्याप्नोति निष्क्रियः सर्वान् भानुर्दश दिशो यथा।
नाडीभिर्वृत्तयो यान्ति लिङ्गदेहसमुद्भवाः ॥ ३६
तत्तत्कर्मानुसारोण जाग्रद्भोगोपलब्धये।
इदं लिङ्गशरीराख्यमामोक्षं न विनश्यति॥ ३७
आत्मज्ञानेन नष्टेऽस्मिन्साविद्ये स्वशरीरके।
आत्मस्वरूपावस्थानं मुक्तिरित्यभिधीयते॥ ३८
उत्पादिते घटे यद्वद्घटाकाशत्वमृच्छति।
घटे नष्टे यथाकाशं स्वरूपेणावतिष्ठते॥ ३९
जाग्रत्कर्मक्षयवशात्स्वप्नभोग उपस्थिते।
बोध्यावस्थां तिरोधाय देहाद्याश्रयलक्षणाम्॥ ४०
कर्मोद्भावितसंस्कारस्तत्र स्वप्नरिरंसया।
अवस्थां च प्रयात्यन्यां मायावी चात्ममायया॥ ४१
घटादिविषयान्सर्वान्बुद्ध्यादि करणानि च।
भूतानि कर्मवशतो वासनामात्रावस्थितान्॥ ४२
एतान्पश्यन्स्वयंज्योतिः साक्ष्यात्मा व्यवतिष्ठते॥ ४३
अत्रान्तः करणादीनां वासनाद्वासनात्मता।
वासनामात्रसाक्षित्वं तेन तच्च परात्मनः॥ ४४
वासनाभिः प्रपञ्चोऽत्र दृश्यते कर्मचोदितः।
जाग्रद्भूमौ यथा तद्वत्कर्तृकर्मक्रियात्मकः॥ ४५
निःशेषबुद्धिसाक्ष्यात्मा स्वयमेव प्रकाशते।
वासनामात्रसाक्षित्वं साक्षिणः स्वाप उच्यते॥ ४६

भूतजन्मनि यद्भूतं कर्म तद्वासनावशात्।
नेदीयस्त्वाद्वयस्याद्ये स्वप्नं प्रायः प्रपश्यति ।। ४७
मध्ये वयसि कार्कश्यात्करणानामिहादितः।
प्रायेण वीक्षते स्वप्नं वासनाकर्मणोर्वशात् ।। ४८
इयासुः परलोकं तु कर्म विद्यादिसंभृतम्।
भाविनो जन्मनो रूपं स्वप्नं आत्मा प्रपश्यति ।। ४९
यद्वत्प्रपतनाच्छ्येनः श्रान्तो गगनमण्डले।
आकुञ्च्य पक्षौ यतते नीडे निलयनायनीः ।। ५०
एवं जाग्रत्स्वप्नभूमौ श्रान्त आत्माऽभिसंचरन्।
आपीतकरणग्रामः कारणेनैति चैकताम् ।। ५१
नाडीमार्गैरिन्द्रियाणामाकृष्यादाय वासनाः।
सर्वं ग्रसित्वा कार्यं च विज्ञानात्मा विलीयते ।। ५२
ईश्वराख्येऽव्याकृतेऽथ यथा सुखमयो भवेत्।
कृत्स्नप्रपञ्चविलयस्तथा भवति चात्मनः ।। ५३
योषितः काम्यमानायाः संभोगान्ते यथासुखम्।
स आनन्दमयोऽबाह्यो नान्तरः केवलस्तथा ।। ५४
प्राज्ञात्मानं समासाद्य विज्ञानात्मा तथैव सः।
विज्ञानात्मा कारणात्मा तथा तिष्ठन्नथापि सः ।। ५५
अविद्यासूक्ष्मवृत्त्यानुभवत्येव यथा सुखम्।
तथाहं सुखमस्वाप्सं नैव किंचिदवेदिषम् ।। ५६
अज्ञानमपि साक्ष्यादिवृत्तिभिश्चानुभूयते।
इत्येवं प्रत्यभिज्ञापि पश्चात्तस्योपजायते ।। ५७

जाग्रत्स्वप्नसुषुप्त्याख्यमेवेहामुत्र लोकयोः ।
पश्चात्कर्मवशादेव विस्फुलिङ्गा इवानलात् ।
जायन्ते कारणादेव मनोबुद्ध्यादिकानि तु ॥ ५९
पयःपूर्णघटो यद्वन्निमग्नः सलिलाशये ।
तैरेवोद्धृत आयाति विज्ञानात्मा तथैत्यजात् ॥ ५९
विज्ञानात्मा कारणात्मा तथा तिष्ठंस्तथापि सः ।
दृश्यते सर्वमेष्वेव नष्टेष्वायात्यदृश्यताम् ॥ ६०
एकाकारोऽर्यमा तत्तत्कार्येष्वेवं परः पुमान् ।
कूटस्थो दृश्यते तद्वद्गच्छत्यागच्छतीव सः ॥ ६१
मोहमात्रान्तरायत्वात्सर्वं तस्योपपद्यते ।
देहाद्यतीत आत्मापि स्वयंज्योतिः स्वभावतः ।
एवं जीवस्वरूपं ते प्रोक्तं दशरथात्मज ॥ ६२

—*—

## एकादशोऽध्यायः

श्रीभगवान् उवाच—
देहान्तरगतिं तस्य परलोकगतिं तथा ।
वक्ष्यामि नृपशार्दूल मत्तः शृणु समाहितः ॥ १
भुक्तं पीतं यतस्तत्र तद्रसादामबन्धनम् ।
स्थूलदेहस्य लिङ्गस्य तेन जीवनधारणम् ॥ २
व्याधिना जरया वापि पीड्यते जाठरोऽनलः ।
श्लेष्मणा तेन भुक्तान्नं पीतं वा न पचत्यलम् ॥ ३
भुक्तपीतरसाभावात्तदा शुष्यन्ति धातवः ।
भुक्तपीतरसेनैव देहे लिम्पन्ति वायवः ॥ ४

समीकरोति यत्तस्मात्समानो वायुरुच्यते।
तदानीं तद्रसाभावादामबन्धनहानितः ॥ ५
परिपक्वरसत्वेन यथा गौरवतः फलम्।
स्वयमेव पतत्याशु तथा लिङ्गं तनोर्व्रजेत्॥ ६
तत्तत्स्थानादपाकृष्य हृषीकाणां च वासनाः।
आध्यात्मिकाधिभूतानि हृत्पद्मे चैकतां गतः ॥ ७
ततोऽध्वगः प्राणवायुः संयुक्तो नववायुभिः।
ऊर्ध्वोच्छ्वासी भवत्येष तथा तेनैकतां गतः ॥ ८
चक्षुषोर्वापि मूर्ध्नो वा नाडीमार्गं समाश्रितः।
विद्याकर्मसमायुक्तो वासनाभिश्च संयुतः।
प्राज्ञात्मानं समाश्रित्य विज्ञानात्मोपसर्पति॥ ९
यथा कुम्भो नीयमानो देशाद्देशान्तरं प्रति।
खपूर्ण एव सर्वत्र स आकाशोऽपि तत्र तु॥ १०
घटाकाशाख्यतां याति तद्वल्लिङ्गं परात्मनः ॥ ११
पुनर्देहान्तरं याति यथा कर्मानुसारतः।
आमोक्षात्संचरत्येवं मत्स्यः कूलद्वयं यथा॥ १२
पापभोगाय चेद्गच्छेद्यमदूतैरधिष्ठितः।
यातनादेहमाश्रित्य नरकानेव केवलम्॥ १३
इष्टापूर्तानि कर्माणि योऽनुतिष्ठति सर्वदा।
पितृलोकं व्रजत्येष याममाश्रित्य बर्हिषः॥ १४
धूमं रात्रिं गतः कृष्णपक्षं तस्माच्च दक्षिणम्।
अयनं च ततो लोकं पितॄणां च ततः परम्।
चन्द्रलोके दिव्यदेहं प्राप्य भुङ्क्ते परां श्रियम्॥ १५

तत्र चन्द्रसमानोऽसौ यावत्कर्मफलं वसेत्।
तथैव कर्मशेषेण यथैतं पुनराव्रजेत्॥ १६
वपुर्विहाय जीवत्वमासाद्याकाशमेति सः।
आकाशाद्वायुमागत्य वायोरम्भो व्रजत्यथ॥ १७
अद्भ्यो मेघं समासाद्य ततो वृष्टिर्भवेदसौ।
ततो धान्यानि भक्ष्याणि जायते कर्मचोदितः॥ १८
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।
मुक्तिमन्ये तु संयान्ति यथाकर्म यथाश्रुतम्॥ १९
ततोऽन्नत्वं समासाद्य पितृभ्यां भुज्यते परम्।
ततः शुक्रं रजश्चैव भूत्वा गर्भोऽभिजायते॥ २०
ततः कर्मानुसारेण भवेत्स्त्रीपुंनपुंसकः।
एवं जीवगतिः प्रोक्ता मुक्तिं तस्य वदामि ते॥ २१
यस्तु शान्त्यादियुक्तः सन् सदा विद्यारतो भवेत्।
स याति देवयानेन ब्रह्मलोकावधिं नरः॥ २२
अर्चिर्भूत्वा दिनं प्राप्य शुक्लपक्षमथो व्रजेत्।
उत्तरायणमासाद्य संवत्सरमथो व्रजेत्॥ २३
आदित्यचन्द्रलोकौ तु विद्युल्लोकमतः परम्।
अथ दिव्यः पुमान् कश्चिद्ब्रह्मलोकादिहैति सः॥ २४
दिव्ये वपुषि संधाय जीवमेवं नयत्यसौ॥ २५
ब्रह्मलोके दिव्यदेहे भुक्त्वा भोगान्यथेप्सितान्।
तत्रोषित्वा चिरं कालं ब्रह्मणा सह मुच्यते॥ २६
शुद्धब्रह्मरतो यस्तु न यात्येव स कुत्रचित्।
तस्य प्राणा विलीयन्ते जले सैन्धवखिल्यवत्॥ २७

स्वप्नदृष्टा यथा सृष्टिः प्रबुद्धस्य विलीयते।
ब्रह्मज्ञानवतस्तद्वद्विलीयन्ते तदैव ते।
विद्याकर्मविहीनो यस्तृतीयं स्थानमेति सः ।। २८
भुक्त्वा च नरकान्घोरान्महारौरवरौरवान्।
पश्चात्प्राक्तनशेषेण क्षुद्रजन्तुर्भवेदसौ ।। २९
यूकामशकदंशादि जन्मासौ लभते भुवि।
एवं जीवगतिः प्रोक्ता किमन्यच्छ्रोतुमिच्छसि ।। ३०
भुक्त्वा च नरकान्घोरान्महारौरवरौरवान्।
पश्चात्प्राक्तनशेषेण क्षुद्रजन्तुर्भवेदसौ ।। २९
यूकामशकदंशादि जन्मासौ लभते भुवि।
एवं जीवगतिः प्रोक्ता किमन्यच्छ्रोतुमिच्छसि ।। ३०

श्रीराम उवाच—

भगवन्यत्त्वया प्रोक्तं फलं तु ज्ञानकर्मणोः ।
ब्रह्मलोके चन्द्रलोके भुङ्क्ते भोगानिति प्रभो ।। ३१
गन्धर्वादिषु लोकेषु कथं भोगः समीरितः ।
देवत्वं प्राप्नुयात्कश्चित्कश्चिदिन्द्रत्वमेव च ।। ३२
एतत्कर्मफलं वास्तु विद्याफलमथापि च।
तद्ब्रूहि गिरिजाकान्त तत्र मे संशयो महान्।। ३३

श्रीभगवानुवाच—

तद्विद्याकर्मणोरेवानुसारेण फलं भवेत्।
युवा च सुन्दरः शूरो नीरोगो बलवान्भवेत्।। ३४
सप्तद्वीपां वसुमतीं भुङ्क्ते निष्कण्टकं यदि।
स प्रोक्तो मानुषानन्दस्तस्माच्छतगुणो मतः ।। ३५

मनुष्यस्तपसा युक्तो गन्धर्वो जायतेऽस्य तु।
तस्माच्छतगुणो देवगन्धर्वाणां न संशयः ।। ३६
एवं शतगुणानन्द उत्तरोत्तरतो भवेत्।
पितॄणां चिरलोकानामाजानसुरसंपदाम्।। ३७
देवतानामथेन्द्रस्य गुरोस्तद्वत्प्रजापतेः ।
ब्रह्मणश्चैवमानन्दाः पुरस्तादुत्तरोत्तरम्।। ३८
ज्ञानाधिक्यात्सुखाधिक्यं नान्यदस्ति सुरालये।
श्रोत्रियोऽवृजिनोऽकामहतो यश्च द्विजो भवेत्।। ३९
तस्याप्येवं समाख्याता आनन्दाश्चोत्तरोत्तरम्।
आत्मज्ञानात्परं नास्ति तस्माद्दशरथात्मज ।। ४०
ब्राह्मणः कर्मभिर्नैव वर्धते नैव हीयते।
न लभ्यः पातकेनैव कर्मणा ज्ञानवान्यदि ।। ४१
तस्मात्सर्वाधिको विप्रो ज्ञानवानेव जायते।
ज्ञात्वा यः कुरुते कर्म तस्याक्षय्यफलं भवेत्।। ४२
यत्फलं लभते मर्त्यः कोटिब्राह्मणभोजनैः ।
तत्फलं समवाप्नोति ज्ञानिनं यस्तु भोजयेत्।। ४३
ज्ञानवन्तं द्विजं यस्तु द्विष्यते च नराधमः ।
स शुष्यमाणो म्रियते यस्मादीश्वर एव सः ।। ४४
उपासको न यात्येव यस्मात्पुनरधोगतिम्।
उपासनरतो भूत्वा तस्मादास्स्व सुखी नृप ।। ४५

—*—

## द्वादशोऽध्यायः

श्रीराम उवाच—

भगवन्देवदेवेश नमस्तेऽस्तु महेश्वर।
उपासनविधिं ब्रूहि देशं कालं च तस्य तु॥ १

ईश्वर उवाच—

शृणु राम प्रवक्ष्यामि देशकालमुपासनम्।
मदंशेन परिच्छिन्ना देहाः सर्वदिवौकसाम्॥ २
ये त्वन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः।
तेऽपि मामेव राजेन्द्र यजन्त्यविधिपूर्वकम्॥ ३
यस्मात्सर्वमिदं विश्वं मत्तो न व्यतिरिच्यते।
सर्वक्रियाणां भोक्ताहं सर्वस्याहं फलप्रदः॥ ४
येनाकारेण ये मर्त्या मामेवैकमुपासते।
तेनाकारेण तेभ्योऽहं प्रसन्नो वाञ्छितं ददे॥ ५
विधिनाऽविधिना वापि भक्त्या ये मामुपासते।
तेभ्यः फलं प्रयच्छामि प्रसन्नोऽहं न संशयः॥ ६
अपि चेत्सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः॥ ७
स्वजीवत्वेन यो वेत्ति मामेवैकमनन्यधीः।
तं न पश्यन्ति पापानि ब्रह्महत्यादिकान्यपि॥ ८
उपासाविधयस्तत्र चत्वारः परिकीर्तिताः।
संपदारोपसंवर्गाध्यासा इति मनीषिभिः॥ ९
अल्पस्य चाधिकत्वेन गुणयोगाद्विचिन्तनम्।
अनन्तं वै मन इति संपद्विधिरुदीरितः॥ १०

विधावारोप्य योपासा सारोपः परिकीर्तितः ।
यद्वदोङ्कारमुद्गीथमुपासीतेत्युदाहृतः ॥ ११
आरोपो बुद्धिपूर्वेण य उपासाविधिश्च सः ।
योषित्यग्निमतिर्यत्तदध्यासः स उदाहृतः ॥ १२
क्रियायोगेन चोपासाविधिः संवर्ग उच्यते ।
संवर्तवायुः प्रलये भूतान्येकोऽवसीदति ॥ १३
उपसंगम्य बुद्ध्या यदासनं देवतात्मना ।
तदुपासनमन्तः स्यात्तद्बहिः संपदादयः ॥ १४
ज्ञानान्तरानन्तरितसजातिज्ञान सन्ततेः ।
संपन्नदेवतात्मत्वमुपासनमुदीरितम् ॥ १५
संपदादिषु बाह्येषु दृढबुद्धिरुपासनम् ।
कर्मकाले तदङ्गेषु दृष्टिमात्रमुपासनम् ।
उपासनमिति प्रोक्तं तदङ्गानि ब्रुवे शृणु ॥ १६
तीर्थक्षेत्रादिगमनं श्रद्धां तत्र परित्यजेत् ।
स्वचित्तैकाग्रता यत्र तत्रासीत सुखं द्विजः ॥ १७
कम्बले मृदुतल्पे वा व्याघ्रचर्मणि वा स्थितः ।
विविक्तदेशे नियतः समग्रीवशिरस्तनूः ॥ १८
अत्याश्रमस्थः सकलानीन्द्रियाणि निरुध्य च ।
भक्त्याथ स्वगुरुं नत्वा योगं विद्वांश्च योजयेत् ॥ १९
यस्त्वविज्ञानवान्भवत्यव्यक्तमनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ २०
विज्ञानिनस्तु भवति यत्नेन मनसा सह ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ २१

यस्त्वविज्ञानवान्भवत्यमनस्कः सदा शुचिः।
न स तत्पदमाप्नोति संसारमपि गच्छति ॥ २२
विज्ञानी यस्तु भवति समनस्कः सदा शुचिः।
स तत्पदमवाप्नोति यस्माद्भूतो न जायते ॥ २३
विज्ञानसारथिर्यस्तु मनःप्रग्रह एव च।
सोऽध्वनः पारमाप्नोति ममैव परमं पदम् ॥ २४
हृत्पुण्डरीकं विरजं विशुद्धं विशदं तथा।
विशोकं च विचिन्त्यात्र ध्यायेन्मां परमेश्वरम् ॥ २५
अचिन्त्यरूपमव्यक्तमनन्तममृतं शिवम्।
आदिमध्यान्तरहितं प्रशान्तं ब्रह्म कारणम् ॥ २६
एवं विभुं चिदानन्दमरूपमजमद्भुतम्।
शुद्धस्फटिकसंकाशमुमादेहार्धधारिणम् ॥ २७
व्याघ्रचर्माम्बरधरं नीलकण्ठं त्रिलोचनम्।
जटाधरं चन्द्रमौलिं नागयज्ञोपवीतिनम् ॥ २८
व्याघ्रचर्मोत्तरीयं च वरेण्यमभयप्रदम्।
पराभ्यामूर्ध्वहस्ताभ्यां बिभ्राणं परशुं मृगम्।
भूतिभूषितसर्वाङ्गं सर्वाभरणभूषितम् ॥ २९
एवमात्मारणिं कृत्वा प्रणवं चोत्तरारणिम्।
ध्याननिर्मथनाभ्यासात्साक्षात्पश्यति मां जनः ॥ ३०
वेदवाक्यैरलभ्योऽहं न शास्त्रैर्नापि चेतसा।
ध्यानेन वृणुते यो मां सर्वदाऽहं वृणोमि तम् ॥ ३१
नाविरतो दुश्चरितान्नाशान्तो नासमाहितः।
नाशान्तमानसो वापि प्रज्ञानेन लभेत माम् ॥ ३२

जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चो यः प्रकाशते।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते॥ ३३
त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत्।
तज्ज्योतिर्लक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः॥ ३४
कोटिमध्याह्नसूर्याभं चन्द्रकोटिसुशीतलम्।
सूर्यचन्द्राग्निनयनं स्मेरवक्त्रसरोरुहम्॥ ३५
एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
सर्वाध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥ ३६
एको वशी सर्वभूतान्तरात्माप्येकं बीजं नित्यदा यः करोति।
तं मां नित्यं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्॥ ३७
अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः॥ ३८
वेदेह मां यः पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
स एव विद्वानमृतोऽत्र भूयान्नान्यः पन्था अयनाय विद्यते॥ ३९
हिरण्यगर्भं विदधामि पूर्वं वेदांश्च तस्मै प्रहिणोमि योऽहम्।
तदेवमीड्यं पुरुषं पुराणं निश्चित्य मां मृत्युमुखात्प्रमुच्यते॥ ४०
एवं शान्त्यादियुक्तः सन्वेत्ति मां यस्तु तत्त्वतः।
निर्मुक्तदुःखसन्तानः सोऽन्ते मय्येव लीयते॥ ४१

—*—

## त्रयोदशोऽध्यायः

सूत उवाच—
एवं श्रुत्वा कौसलेयस्तुष्टो मतिमतां वरः।
पप्रच्छ गिरिजाकान्तं सुभगं मुक्तिलक्षणम्॥ १

अपञ्चीकृतभूतोत्थं सूक्ष्मदेहोऽयमात्मनः ।
द्वितीयोऽयमुपाधिः स्यात् सुखादेरवबोधकः ॥ २८
अनाद्यनिर्वाच्यमिदमज्ञानं तु तृतीयकः ।
देहोऽयमात्मनो भाति कारणात्मा नगेश्वर ॥ २९
उपाधिविलये जाते केवलात्माऽवशिष्यते ।
देहत्रये पञ्चकोशा अन्तःस्थाः सन्ति सर्वदा । ३०
पञ्चकोशपरित्यागे ब्रह्म पुच्छं हि लभ्यते ।
नेति नेतीत्यादिवाक्यैर्मम रूपं यदुच्यते ॥ ३१
न जायते म्रियते तत्कदाचिन्
नायं भूत्वा न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ ३२
हतं चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ ३३
अणोरणीयान्महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमस्य ॥ ३४
आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३५
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ३६
यस्त्वविद्वान् भवति चामनस्कश्च सदाऽशुचिः ।
न तत्पदमवाप्नोति संसारं चाधिगच्छति ॥ ३७

यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ।। ३८
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति मदीयं यत्परं पदम् ।। ३९
इत्थं श्रुत्या च मत्या च निश्चित्याऽऽत्मानमात्मना ।
भावयेन्मामात्मरूपां निदिध्यासगतोऽपि च ।। ४०
योगवृत्तेः पुरा स्वस्मिन् भावयेदक्षरत्रयम् ।
देवीप्रणवसंज्ञस्य ध्यानार्थं मन्त्रवाच्ययोः ।। ४१
हकारः स्थूलदेहः स्याद्रकारः सूक्ष्मदेहकः ।
ईकारः कारणात्मासौ ह्रीङ्कारोऽहं तुरीयकम् ।। ४२
एवं समष्टिदेहेऽपि ज्ञात्वा बीजत्रयं क्रमात् ।
समष्टिव्यष्ट्योरेकत्वं भावयेन्मतिमान् नरः ।। ४३
समाधिकालात् पूर्वं तु भावयित्वैवमादृतः ।
ततो ध्यायेन्निलीनाक्षो देवीं मां जगदीश्वरीम् ।। ४४
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ।
निवृत्तविषयाकाङ्क्षो वीतदोषो विमत्सरः ।। ४५
भक्त्या निर्व्याजया युक्तो गुहायां निःस्वने स्थले ।
हकारं विश्वमात्मानं रकारे प्रविलापयेत् ।। ४६
रकारं तैजसं देवमीकारे प्रविलापयेत् ।
ईकारं प्राज्ञमात्मानं ह्रीङ्कारे प्रविलापयेत् ।। ४७
वाच्यवाचकताहीनं द्वैतभावविवर्जितम् ।
अखण्डं सच्चिदानन्दं भावयेत्तच्छिखान्तरे ।। ४८

इति ध्यानेन मां राजन् साक्षात्कृत्य नरोत्तमः।
मद्रूप एव भवति द्वयोरप्येकता यतः॥ ४९
योगयुक्त्याऽनया दृष्ट्वा मामात्मानं परात्परम्।
अज्ञानस्य सकार्यस्य तत्क्षणे नाशको भवेत्॥ ५०

—*—

## सप्तमोऽध्यायः

हिमालय उवाच—
योगं वद महेशानि साङ्गं संवित्प्रदायकम्।
कृतेन येन योग्योऽहं भवेयं तत्त्वदर्शने॥ १
श्रीदेव्युवाच—
न योगो नभसः पृष्ठे न भूमौ न रसातले।
ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः॥ २
तत्प्रत्यूहाः षडाख्याता योगविघ्नकरानघ।
कामक्रोधौ लोभमोहौ मदमात्सर्यसंज्ञकौ॥ ३
योगाङ्गैरेव भित्त्वा तान् योगिनो योगमाप्नुयुः।
यमं नियममासन प्राणायामौ ततः परम्॥ ४
प्रत्याहारं धारणाख्यं ध्यानं सार्धं समाधिना।
अष्टाङ्गान्याहुरेतानि योगिनां योगसाधने॥ ५
अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयाऽऽर्जवम्।
क्षमा धृतिर्मिताहारः शौचं चेति यमा दश॥ ६
तपः सन्तोष आस्तिक्यं दानं देवस्य पूजनम्।
सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो हुतम्॥ ७

दशैते नियमाः प्रोक्ता मया पर्वतनायक।
पद्मासनं स्वस्तिकं च भद्रं वज्रासनं तथा ॥ ८
वीरासनमिति प्रोक्तं क्रमादासनपञ्चकम्।
ऊर्वोरुपरि विन्यस्य सम्यक् पादतले शुभे ॥ ९
अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात् ततः।
पद्मासनमिति प्रोक्तं योगिनां हृदयङ्गमम् ॥ १०
जानूर्वोरन्तरे सम्यक् कृत्वा पादतले शुभे।
ऋजुकायो विशेद्योगी स्वस्तिकं तत्प्रचक्षते ॥ ११
सीवन्याः पार्श्वयोर्न्यस्य गुल्फयुग्मं सुनिश्चितम्।
वृषणाधः पादपार्ष्णी पार्ष्णिभ्यां परिबन्धयेत् ॥ १२
भद्रासनमिति प्रोक्तं योगिभिः परिपूजितम्।
ऊर्वोः पादौ क्रमान्न्यस्य जान्वोः प्रत्यङ्मुखाङ्गुली ॥ १३
करौ विदध्यादाख्यातं वज्रासनमनुत्तमम्।
एकं पादमधः कृत्वा विन्यस्योरुं तथोत्तरे ॥ १४
ऋजुकायो विशेद्योगी वीरासनमितीरितम्।
इडयाऽऽकर्षयेद्वायुं बाह्यं षोडशमात्रया ॥ १५
धारयेत् पूरितं योगी चतुःषष्ट्या तु मात्रया।
सुषुम्नामध्यगं सम्यग्द्वात्रिंशन्मात्रया शनैः ॥ १६
नाड्या पिङ्गलया चैव रेचयेद्योगवित्तमः।
प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः ॥ १७
भूयो भूयः क्रमात् तस्य बाह्यमेवं समाचरेत्।
मात्रावृद्धिः क्रमेणैव सम्यग्द्वादश षोडश ॥ १८

जपध्यानादिभिः सार्धं सगर्भं तं विदुर्बुधाः ।
तदपेतं विगर्भं च प्राणायामं परे विदुः ॥ १९
क्रमादभ्यस्यतः पुंसो देहे स्वेदोद्गमोऽधमः ।
मध्यमः कम्पसंयुक्तो भूमित्यागः परो मतः ॥ २०
उत्तमस्य गुणावाप्तिर्यावच्छीलनमिष्यते ।
इन्द्रियाणां विचरतां विषयेषु निरर्गलम् ॥ २१
बलादाहरणं तेभ्यः प्रत्याहारोऽभिधीयते ।
अङ्गुष्ठगुल्फजानूरुमूलाधारलिङ्गनाभिषु ॥ २२
हृद्ग्रीवाकण्ठदेशेषु लम्बिकायां ततो नसि ।
भ्रूमध्ये मस्तके मूर्ध्नि द्वादशान्ते यथाविधि ॥ २३
धारणं प्राणमरुतो धारणेति निगद्यते ।
समाहितेन मनसा चैतन्यान्तरवर्तिना ॥ २४
आत्मन्यभीष्टदेवानां ध्यानं ध्यानमिहोच्यते ।
समत्वभावना नित्यं जीवात्मपरमात्मनोः ॥ २५
समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम् ।
इदानीं कथये तेऽहं मन्त्रयोगमनुत्तमम् ॥ २६
विश्वं शरीरमित्युक्तं पञ्चभूतात्मकं नग ।
चन्द्रसूर्याग्नितेजोभिर्जीवब्रह्मैक्यरूपकम् ॥ २७
तिस्रः कोट्यस्तदर्धेन शरीरे नाड्यो मताः ।
तासु मुख्या दश प्रोक्तास्ताभ्यस्तिस्रो व्यवस्थिताः ॥ २८
प्रधाना मेरुदण्डेऽत्र चन्द्रसूर्याग्निरूपिणी ।
इडा वामे स्थिता नाडी शुभ्रा तु चन्द्ररूपिणी ॥ २९

शक्तिरूपा तु सा नाडी साक्षादमृतविग्रहा।
दक्षिणे या पिङ्गलाख्या पुंरूपा सूर्यविग्रहा।। ३०
सर्वतेजोमयी सा तु सुषुम्ना वह्निरूपिणी।
तस्या मध्ये विचित्राख्ये इच्छाज्ञानक्रियात्मकम्।। ३१
मध्ये स्वयंभूलिङ्गं तु कोटिसूर्यसमप्रभम्।
तदूर्ध्वं मायाबीजं तु हरात्मा बिन्दुनादकम्।। ३२
तदूर्ध्वं तु शिखाकारा कुण्डली रक्तविग्रहा।
देव्यात्मिका तु सा प्रोक्ता मदभिन्ना नगाधिप।। ३३
तद्बाह्ये हेमरूपाभं वादिसान्तचतुर्दलम्।
द्रुतहेमसमप्रख्यं पद्मं तत्र विचिन्तयेत्।। ३४
तदूर्ध्वं त्वनलप्रख्यं षड्दलं हीरकप्रभम्।
बादिलान्तषड्वर्णेन स्वाधिष्ठानमनुत्तमम्।। ३५
मूलमाधारषट्कोणं मूलाधारं ततो विदुः।
स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः।। ३६
तदूर्ध्वं नाभिदेशे तु मणिपूरं महाप्रभम्।
मेघाभं विद्युदाभं च बहुतेजोमयं ततः।। ३७
मणिवद्भिन्नं तत्पद्मं मणिपद्मं तथोच्यते।
दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम्।। ३८
विष्णुनाऽधिष्ठितं पद्मं विष्ण्वालोकनकारणम्।
तदूर्ध्वेऽनाहतं पद्ममुद्यदादित्यसन्निभम्।। ३९
कादिठान्तदलैरेकं पत्रैश्च समधिष्ठितम्।
तन्मध्ये बाणलिङ्गं तु सूर्यायुतसमप्रभम्।। ४०

शब्दब्रह्ममयं शब्दानाहतं तत्र दृश्यते।
अनाहताख्यं तत्पद्मं मुनिभिः परिकीर्तितम्॥ ४१
आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम्।
तदूर्ध्वं तु विशुद्धाख्यं दलं षोडशपङ्कजम्॥ ४२
स्वरैः षोडशभिर्युक्तं धूम्रवर्णं महाप्रभम्।
विशुद्धं तनुते यस्माज्जीवस्य हंसलोकनात्॥ ४३
विशुद्धं पद्ममाख्यातमाकाशाख्यं महाद्भुतम्।
आज्ञाचक्रं तदूर्ध्वे तु आत्मनाऽधिष्ठितं परम्॥ ४४
आज्ञासंक्रमणं तत्र तेनाज्ञेति प्रकीर्तितम्।
द्विदलं हक्षसंयुक्तं पद्मं तत्सुमनोहरम्॥ ४५
कैलासाख्यं तदूर्ध्वं तु रोधिनी तु तदूर्ध्वतः।
एवं त्वाधारचक्राणि प्रोक्तानि तव सुव्रत॥ ४६
सहस्रारयुतं बिन्दुस्थानं तदूर्ध्वमीरितम्।
इत्येतत् कथितं सर्वं योगमार्गमनुत्तमम्॥ ४७
आदौ पूरकयोगेनाप्याधारे योजयेन्मनः।
गुदमेढ्रान्तरे शक्तिस्तामाकुंच्य प्रबोधयेत्॥ ४८
लिङ्गभेदक्रमेणैव बिन्दुचक्रं च प्रापयेत्।
शम्भुना तां परां शक्तिमेकीभूतां विचिन्तयेत्॥ ४९
तत्रोत्थितामृतं यत्तु द्रुतलाक्षारसोपमम्।
पाययित्वा तु तां शक्तिं मायाख्यां योगसिद्धिदम्॥ ५०
षट्चक्रदेवतास्तत्र सन्तर्प्यामृतधारया।
आनयेत्तेन मार्गेण मूलाधारं ततः सुधीः॥ ५१

एवमभ्यस्यमानस्याऽप्यहन्यनि निश्चितम्।
पूर्वोक्तदूषिता मन्त्राः सर्वे सिध्यन्ति नाऽन्यथा ।। ५२
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात्।
ये गुणाः सन्ति देव्या मे जगन्मातुर्यथा तथा ।। ५३
ते गुणाः साधकवरे भवन्त्येव न चाऽन्यथा।
इत्येवं कथितं तात वायुधारणमुत्तमम्।। ५४
इदानीं धारणाख्यं तु शृणुष्वावहितो मम।
दिक्कालाद्यनवच्छिन्नदेव्यां चेतो विधाय च ।। ५५
तन्मयो भवति क्षिप्रं जीवब्रह्मैक्ययोजनात्।
अथवा समलं चेतो यदि क्षिप्रं न सिद्ध्यति ।। ५६
तदाऽवयवयोगेन योगी योगान् समभ्यसेत्।
मदीयहस्तपादादावङ्गे तु मधुरे नग ।। ५७
चित्तं संस्थापयेन्मन्त्री स्थानं स्थानं जयात् पुनः ।
विशुद्धचित्तः सर्वस्मिन् रूपे संस्थापयेन्मनः ।। ५८
यावन्मनो लयं याति देव्यां संविदि पर्वत।
तावदिष्टमनुं मन्त्री जपहोमैः समभ्यसेत्।। ५९
मन्त्राभ्यासेन योगेन ज्ञेयज्ञानाय कल्पते।
न योगेन विना मन्त्रो न मन्त्रेण विना हि सः ।। ६०
द्वयोरभ्यासयोगो हि ब्रह्मसंसिद्धिकारणम्।
तमःपरिवृते गेहे घटो दीपेन दृश्यते ।। ६१
एवं मायावृतो ह्यात्मा मनुना गोचरीकृतः ।
इति योगविधिः कृत्स्नः साङ्गः प्रोक्तो मयाऽधुना ।। ६२
गुरूपदेशतो ज्ञेयो नाऽन्यथा शास्त्रकोटिभिः ।। ६३

## अष्टमोऽध्यायः

श्रीदेव्युवाच—

इत्यादियोगयुक्तात्मा ध्यायेन्मां ब्रह्मरूपिणीम्।
भक्त्या निर्व्याजया राजन्नासने समुपस्थितः ॥ १
आविः सन्निहितं गुहाचरं नाम महत्पदम्।
अत्रैतत् सर्वमर्पितमेजत्प्राणन्निमिषच्च यत् ॥ २
एतज्जानथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम्।
यदर्चिमद्यदणुभ्योऽणु च यस्मिँल्लोका निहिता लोकिनश्च ॥ ३
तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः।
तदेतत् सत्यममृतं तद्वेद्धव्यं सौम्य विद्धि ॥ ४
धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्धयीत।
आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सौम्य विद्धि ॥ ५
प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ६
यस्मिन् द्यौश्च पृथिवी चाऽन्तरिक्ष
        मोतं मनः सह प्राणैश्च सर्वैः।
तमेवैकं जानथात्मानमन्या
        वाचो विमुञ्चथामृतस्यैष सेतुः ॥ ७
अरा इव रथनाभौ संहता यत्र नाड्यः।
स एषोऽन्तश्चरते बहुधा जायमानः ॥ ८
ओमित्येव ध्यायथात्मानं स्वस्ति वः पाराय तमसः परस्तात्।
दिव्ये ब्रह्मपुरे व्योम्नि आत्मा सम्प्रतिष्ठितः ॥ ९

मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय।
तद्विज्ञानेन परिश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति।। १०
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।। ११
हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः।। १२
न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनु भाति सर्वं
तस्य भासा सर्वमिदं विभाति।। १३
ब्रह्मैवेदममृतं पुरस्तात् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण।
अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वं वरिष्ठम्।। १४
एतादृगनुभवो यस्य स कृतार्थो नरोत्तमः।
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति।। १५
द्वितीयाद्वै भयं राजंस्तदभावाद्बिभेति न।
न तद्वियोगो मेऽप्यस्ति मद्वियोगोऽपि तस्य न।। १६
अहमेव स सोऽहं वै निश्चितं विद्धि पर्वत।
मद्दर्शनं तु तत्र स्याद्यत्र ज्ञानी स्थितो मम।। १७
नाहं तीर्थे न कैलासे वैकुण्ठे वा न कर्हिचित्।
वसामि किन्तु मज्ज्ञानिहृदयाम्भोजमध्यमे।। १८
मत्पूजाकोटिफलदं सकृन्मज्ज्ञानिनोऽर्चनम्।
कुलं पवित्रं तस्याऽस्ति जननी कृतकृत्यका।। १९

विश्वम्भरा पुण्यवती चिल्लयो यस्य चेतसः ।
ब्रह्मज्ञानं तु यत्पृष्टं त्वया पर्वतसत्तम ।। २०
कथितं तन्मया सर्वं नातो वक्तव्यमस्ति हि ।
इदं ज्येष्ठाय पुत्राय भक्तियुक्ताय शीलिने ।। २१
शिष्याय च यथोक्ताय वक्तव्यं नान्यथा क्वचित् ।
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।। २२
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ।
येनोपदिष्टा विद्येयं स एव परमेश्वरः ।। २३
यस्यायं सुकृतं कर्तुमसमर्थस्ततो ऋणी ।
पित्रोरप्यधिकः प्रोक्तो ब्रह्मजन्मप्रदायकः ।। २४
पितृजातं जन्म नष्टं नेत्थं जातं कदाचन ।
तस्मै न द्रुह्येदित्यादि निगमोऽप्यवदन्नग ।। २५
तस्माच्छास्त्रस्य सिद्धान्तो ब्रह्मदाता गुरुः परः ।
शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न शङ्करः ।। २६
तस्मात् सर्वप्रयत्नेन श्रीगुरुं तोषयेन्नग ।
कायेन मनसा वाचा सर्वदा तत्परो भवेत् ।। २७
अन्यथा तु कृतघ्नः स्यात् कृतघ्ने नास्ति निष्कृतिः ।
इन्द्रेणाऽथर्वणायोक्ता शिरश्छेदप्रतिज्ञया ।। २८
अश्विभ्यां कथने तस्य शिरश्छिन्नं च वज्रिणा ।
अश्वीयं तच्छिरो नष्टं दृष्ट्वा वैद्यौ सुरोत्तमौ ।। २९
पुनः संयोजितं स्वीयं ताभ्यां मुनिशिरस्तदा ।
इति सङ्कटसम्पाद्या ब्रह्मविद्या नगाधिप ।। ३०

लब्धा येन स धन्यः स्यात् कृतकृत्यश्च भूधर ॥ ३१

—*—

## नवमोऽध्यायः

हिमालय उवाच—

स्वीयां भक्तिं वदस्वाम्ब येन ज्ञानं सुखेन हि।
जायेत मनुजस्यास्य मध्यमस्याविरागिणः ॥ १

देव्युवाच—

मार्गास्त्रयो मे विख्याता मोक्षप्राप्तौ नगाधिप।
कर्मयोगो ज्ञानयोगो भक्तियोगश्च सत्तम ॥ २
त्रयाणामप्ययं योगः कर्तुं शक्योऽस्ति सर्वथा।
सुलभत्वान्मानसत्वात् कायचित्ताद्यपीडनात् ॥ ३
गुणभेदान्मनुष्याणां सा भक्तिस्त्रिविधा मता।
परपीडां समुद्दिश्य दम्भं कृत्वा पुरःसरम् ॥ ४
मात्सर्यक्रोधयुक्तो यस्तस्य भक्तिस्तु तामसी।
परपीडादिरहितः स्वकल्याणार्थमेव च ॥ ५
नित्यं सकामो हृदये यशोर्थी भोगलोलुपः।
तत्तत्फलसमावाप्त्यै मामुपास्तेऽतिभक्तितः ॥ ६
भेदबुद्ध्या तु मां स्वस्मादन्यां जानाति पामरः।
तस्य भक्तिः समाख्याता नगाधिप तु राजसी ॥ ७
परमेशार्पणं कर्म पापसङ्क्षालनाय च।
वेदोक्तत्वादवश्यं तत्कर्तव्यं तु मयाऽनिशम् ॥ ८
इति निश्चितबुद्धिस्तु भेदबुद्धिमुपाश्रितः।
करोति प्रीतये कर्म भक्तितः सा न सात्त्विकी ॥

परभक्तेः प्रापिकेयं भेदबुद्ध्यवलम्बनात्।
पूर्वप्रोक्ते ह्युभे भक्ती न परप्रापिके मते ॥ १०
अधुना पराभक्तिं तु प्रोच्यमानां निबोध मे।
मद्गुणश्रवणं नित्यं मम नामानुकीर्तनम् ॥ ११
कल्याणगुणरत्नानामाकरायां मयि स्थिरम्।
चेतसो वर्तनं चैव तैलधारासमं सदा ॥ १२
हेतुस्तु तत्र को वाऽपि न कदाचिद्भवेदपि।
सामीप्यसार्ष्टिसायुज्यसालोक्यानां न चैषणा ॥ १३
मत्सेवातोऽधिकं किञ्चिन्नैव जानाति कर्हिचित्।
सेव्यसेवकताभावात्तत्र मोक्षं न वाञ्छति ॥ १४
परानुरक्त्या मामेव चिन्तयेद्यो ह्यतन्द्रितः।
स्वाभेदेन मां नित्यं जानाति न विभेदतः ॥ १५
मद्रूपत्वेन जीवानां चिन्तनं कुरुते तु यः।
यथा स्वस्यात्मनि प्रीतिस्तथैव च परात्मनि ॥ १६
चैतन्यस्य समानत्वान्न भेदं कुरुते तु यः।
सर्वत्र वर्तमानानां सर्वरूपां च सर्वदा ॥ १७
नमते यजते चैवाप्याचाण्डालान्तमीश्वर।
न कुत्रापि द्रोहबुद्धिं कुरुते भेदवर्जनात् ॥ १८
मत्स्थानदर्शने श्रद्धा मद्भक्तदर्शने तथा।
मच्छास्त्रश्रवणे श्रद्धा मन्त्रतन्त्रादिषु प्रभो ॥ १९
मयि प्रेमाकुलमती रोमाञ्चिततनुः सदा।
प्रेमाश्रुजलपूर्णाक्षः कण्ठगद्गदनिस्वनः ॥ २०

अनन्येनैव भावेन पूजयेद्यो नगाधिप।
मामीश्वरीं जगद्योनिं सर्वकारणकारणम्॥ २१
व्रतानि मम दिव्यानि नित्यनैमित्तिकान्यपि।
नित्यं यः कुरुते भक्त्या वित्तशाठ्यविवर्जितः॥ २२
मदुत्सवदिदृक्षा च मदुत्सवकृतिस्तथा।
जायते यस्य नियतं स्वभावादेव भूधर॥ २३
उच्चैर्गायंश्च नामानि ममैव खलु नृत्यति।
अहङ्कारादिरहितो देहतादात्म्यवर्जितः॥ २४
प्रारब्धेन यथा यच्च क्रियते तत्तथा भवेत्।
न मे चिन्ताऽस्ति तत्रापि देहसंरक्षणादिषु॥ २५
इति भक्तिस्तु या प्रोक्ता परभक्तिस्तु सा स्मृता।
यस्यां देव्यतिरिक्तं तु न किञ्चिदपि भाव्यते॥ २६
इत्थं जाता परा भक्तिर्यस्य भूधर तत्त्वतः।
तदैव तस्य चिन्मात्रे मद्रूपे विलयो भवेत्॥ २७
भक्तेस्तु या परा काष्ठा सैव ज्ञानं प्रकीर्तितम्।
वैराग्यस्य च सीमा सा ज्ञाने तदुभयं यतः॥ २८
भक्तौ कृतायां यस्यापि प्रारब्धवशतो नग।
न जायते मम ज्ञानं मणिद्वीपं स गच्छति॥ २९
तत्र गत्वाऽखिलान् भोगाननिच्छन्नपि चर्च्छति।
तदन्ते मम चिद्रूपज्ञानं सम्यग्भवेन्नग॥ ३०
तेन मुक्तः सदैव स्याज्ज्ञानान्मुक्तिर्न चाऽन्यथा।
इहैव यस्य ज्ञानं स्याद् हृद्गतप्रत्यगात्मनः॥ ३१

मम संवित्परतनोस्तस्य प्राणा व्रजन्ति न।
ब्रह्मैव संस्तदाप्नोति ब्रह्मैव ब्रह्म वेद यः ।। ३२
कण्ठं चामीकरसममज्ञानात्तु तिरोहितम्।
ज्ञानादज्ञाननाशेन लब्धमेव हि लभ्यते।। ३३
विदिताविदितादन्यन्नगोत्तम वपुर्मम।
यथाऽऽदर्शे तथाऽऽत्मनि यथा जले तथा पितृलोके।। ३४
छायातपौ यथा स्वच्छौ विविक्तौ तद्वदेव हि।
मम लोके भवेज्ज्ञानं द्वैतभावविवर्जितम्।। ३५
यस्तु वैराग्यवानेव ज्ञानहीनो म्रियेत चेत्।
ब्रह्मलोके वसेन्नित्यं यावत् कल्पं ततः परम्।। ३६
शुचीनां श्रीमतां गेहे भवेत्तस्य जनिः पुनः।
करोति साधनं पश्चात्ततो ज्ञानं हि जायते।। ३७
अनेकजन्मभी राजन्ज्ञानं स्यान्नैकजन्मना।
ततः सर्वप्रयत्नेन ज्ञानार्थं यत्नमाश्रयेत्।। ३८
नो चेन्महान् विनाशः स्याज्जन्मैतद् दुर्लभं पुनः।
तत्राऽपि प्रथमे वर्णे वेदप्राप्तिश्च दुर्लभा।। ३९
शमादिषट्कसम्पत्तिर्योगसिद्धिस्तथैव च।
तथोत्तमगुरुप्राप्तिः सर्वमेवात्र दुर्लभम्।। ४०
तथेन्द्रियाणां पटुता संस्कृतत्वं तनोस्तथा।
अनेकजन्मपुण्यैस्तु मोक्षेच्छा जायते ततः ।। ४१
साधने सफलेऽप्येवं जायमानेऽपि यो नरः।
ज्ञानार्थं नैव यतते तस्य जन्म निरर्थकम्।। ४२

तस्माद्राजन् यथाशक्त्या ज्ञानार्थं यत्नमाश्रयेत्।
पदे पदेऽश्वमेधस्य फलमाप्नोति निश्चितम्॥ ४३
घृतमिव पयसि निगूढं भूते भूते च वसति विज्ञानम्।
सततं मन्थयितव्यं मनसा मन्थानभूतेन॥ ४४
ज्ञानं लब्ध्वा कृतार्थः स्यादिति वेदान्तडिण्डिमः।
सर्वमुक्तः समासेन किं भूयः श्रोतुमिच्छसि॥ ४५

—*—

## दशमोऽध्यायः

हिमालय उवाच—
कति स्थानानि देवेशि द्रष्टव्यानि महीतले।
मुख्यानि च पवित्राणि देवीप्रियतमानि च॥ १
व्रतान्यपि तथा यानि तुष्टिदान्युत्सवा अपि।
तत् सर्वं वद मे मातः कृतकृत्यो यतो नरः॥ २
श्रीदेव्युवाच—
सर्वं दृश्यं मम स्थानं सर्वे काला व्रतात्मकाः।
उत्सवाः सर्वकालेषु यतोऽहं सर्वरूपिणी॥ ३
तथाऽपि भक्तवात्सल्यात् किञ्चित् किञ्चिदथोच्यते।
शृणुष्वावहितो भूत्वा नगराज वचो मम॥ ४
कोलापुरं महास्थानं यत्र लक्ष्मीः सदा स्थिता।
मातुः पुरं द्वितीयं च रेणुकाधिष्ठितं परम्॥ ५
तुलजापुरं तृतीयं स्यात् सप्तशृङ्गं तथैव च।
हिङ्गुलाया महास्थानं ज्वालामुख्यास्तथैव च॥ ६

शाकम्भर्याः परं स्थानं भ्रामर्याः स्थानमुत्तमम् ।
श्रीरक्तदन्तिकास्थानं दुर्गास्थानं तथैव च ॥ ७
विन्ध्याचलनिवासिन्याः स्थानं सर्वोत्तमोत्तमम् ।
अन्नपूर्णामहास्थानं काञ्चीपुरमनुत्तमम् ॥ ८
भीमादेव्याः परं स्थानं विमलास्थानमेव च ।
श्रीचन्द्रलामहास्थानं कौशिकीस्थानमेव च ॥ ९
नीलाम्बायाः परं स्थानं नीलपर्वतमस्तके ।
जाम्बूनदेश्वरीस्थानं तथा श्रीनगरं शुभम् ॥ १०
गुह्यकाल्या महास्थानं नेपाले यत् प्रतिष्ठितम् ।
मीनाक्ष्याः परमं स्थानं यच्च प्रोक्तं चिदम्बरे ॥ ११
वेदारण्यं महास्थानं सुन्दर्याः समधिष्ठितम् ।
एकाम्बरं महास्थानं पराशक्त्या प्रतिष्ठितम् ॥ १२
मदालसा परं स्थानं योगेश्वर्यास्तथैव च ।
तथा नीलसरस्वत्याः स्थानं चीनेषु विश्रुतम् ॥ १३
वैद्यनाथे तु बगलास्थानं सर्वोत्तमं मतम् ।
श्रीमच्छ्रीभुवनेश्वर्या मणिद्वीपं मम स्मृतम् ॥ १४
श्रीमत्त्रिपुरभैरव्याः कामाख्यायोनिमण्डलम् ।
भूमण्डले क्षेत्ररत्नं महामायाधिवासितम् ॥ १५
नातः परतरं स्थानं क्वचिदस्ति धरातले ।
प्रतिमासं भवेद्देवी यत्र साक्षाद्रजस्वला ॥ १६
तत्रत्या देवताः सर्वाः पर्वतात्मकतां गताः ।
पर्वतेषु वसन्त्येव महत्यो देवता अपि ॥ १७

तत्रत्या पृथिवी सर्वा देवीरूपा स्मृता बुधैः ।
नातः परतरं स्थानं कामाख्यायोनिमण्डलात् ॥ १८
गायत्र्याश्च परं स्थानं श्रीमत्पुष्करमीरितम् ।
अमरेशे चण्डिका स्यात् प्रभासे पुष्करेक्षिणी ॥ १९
नैमिषे तु महास्थाने देवी सा लिङ्गधारिणी ।
पुरुहूता पुष्कराक्षे आषाढौ च रतिस्तथा ॥ २०
चण्डमुण्डी महास्थाने दण्डिनी परमेश्वरी ।
भारभूतौ भवेद्भूतिर्नाकुले नकुलेश्वरी ॥ २१
चन्द्रिका तु हरिश्चन्द्रे श्रीगिरौ शाङ्करी स्मृता ।
जप्येश्वरे त्रिशूला स्यत् सूक्ष्मा चाम्रातकेश्वरे ॥ २२
शाङ्करी तु महाकाले शर्वाणी मध्यमाभिधे ।
केदाराख्ये महाक्षेत्रे देवी सा मार्गदायिनी ॥ २३
भैरवाख्ये भैरवी सा गयायां मङ्गला स्मृता ।
स्थाणुप्रिया कुरुक्षेत्रे स्वायम्भुव्यपि नाकुले ॥ २४
कनखले भवेदुग्रा विश्वेशा विमलेश्वरे ।
अट्टहासे महानन्दा महेन्द्रे तु महान्तका ॥ २५
भीमे भीमेश्वरी प्रोक्ता स्थाने वस्त्रापथे पुनः ।
भवानी शाङ्करी प्रोक्ता रुद्राणी त्वर्धकोटिके ॥ २६
अविमुक्ते विशालाक्षी महाभागा महालये ।
गोकर्णे भद्रकर्णी स्याद्भद्रा स्याद्भद्रकर्णके ॥ २७
उत्पलाक्षी सुवर्णाक्षे स्थाण्वीशा स्थाणुसंज्ञके ।
कमलालये तु कमला प्रचण्डा छगलण्डके ॥ २८

कुरण्डले त्रिसन्ध्या स्यान्माकोटे मुकुटेश्वरी।
मण्डलेशे शाण्डकी स्यात् काली कालञ्जरे पुनः ॥ २९
शङ्कुकर्णे ध्वनिः प्रोक्ता स्थूला स्यात् स्थूलकेश्वरे।
ज्ञानिनां हृदयाम्भोजे हृल्लेखा परमेश्वरी॥ ३०
प्रोक्तानीमानि स्थानानि देव्याः प्रियतमानि च।
तत्तत्क्षेत्रस्य माहात्म्यं श्रुत्वा पूर्वं नगोत्तम॥ ३१
तदुक्तेन विधानेन पश्चाद्देवीं प्रपूजयेत्।
अथवा सर्वक्षेत्राणि काश्यां सन्ति नगोत्तम॥ ३२
तत्र चैव वसेन्नित्यं देवीभक्तिपरायणः।
तानि स्थानानि सम्पश्यन् जपन् देवीं निरन्तरम्॥ ३३
ध्यायंस्तच्चरणाम्भोजं मुक्तो भवति बन्धनात्।
इमानि देवीनामानि प्रातरुत्थाय यः पठेत्॥ ३४
भस्मीभवन्ति पापानि तत्क्षणान्नग सत्वरम्।
श्राद्धकाले पठेदेतान्यमलानि द्विजाग्रतः॥ ३५
मुक्तास्तत्पितरः सर्वे प्रयान्ति परमां गतिम्।
अधुना कथयिष्यामि व्रतानि तव सुव्रत॥ ३६
नारीभिश्च नरैश्चैव कर्तव्यानि प्रयत्नतः।
व्रतमनन्ततृतीयाख्यं रसकल्याणिनीव्रतम्॥ ३७
आर्द्रानन्दकरं नाम्ना तृतीयाया व्रतं च यत्।
शुक्रवारव्रतं चैव तथा कृष्णचतुर्दशी॥ ३८
भौमवारव्रतं चैव प्रदोषव्रतमेव च।
यत्र देवो महादेवो देवीं संस्थाप्य विष्टरे॥ ३९

नृत्यं करोति पुरतः सार्धं देवैर्निशामुखे।
तत्रोपोष्य रजन्यादौ प्रदोषे पूजयेच्छिवाम्॥ ४०
प्रतिपक्षं विशेषेण तद्देवीप्रीतिकारकम्।
सोमवारव्रतं चैव ममातिप्रियकृन्नग॥ ४१
तत्रापि देवीं सम्पूज्य रात्रौ भोजनमाचरेत्।
नवरात्रद्वयं चैव व्रतं प्रीतिकरं मम॥ ४२
एवमन्यान्यपि विभो नित्यनैमित्तिकानि च।
व्रतानि कुरुते यो वै मत्प्रीत्यर्थं विमत्सरः॥ ४३
प्राप्नोति मम सायुज्यं स मे भक्तः स मे प्रियः।
उत्सवानपि कुर्वीत दोलोत्सवमुखान् विभो॥ ४४
शयनोत्सवं यथा कुर्यात् तथा जागरणोत्सवम्।
रथोत्सवं च मे कुर्याद्दमनोत्सवमेव च॥ ४५
पवित्रोत्सवमेवापि श्रावणे प्रीतिकारकम्।
मम भक्तः सदा कुर्यादेवमन्यान् महोत्सवान्॥ ४६
मद्भक्तान् भोजयेत् प्रीत्या तथा चैव सुवासिनीः।
कुमारीर्बटुकांश्चापि मद्बुद्ध्या तद्गतान्तरः॥ ४७
वित्तशाठ्येन रहितो यजेदेतान् सुमादिभिः।
य एवं कुरुते भक्त्या प्रतिवर्षमतन्द्रितः॥ ४८
स धन्यः कृतकृत्योऽसौ मत्प्रीतेः पात्रमञ्जसा।
सर्वमुक्तं समासेन मम प्रीतिप्रदायकम्।
नाशिष्याय प्रदातव्यं नाभक्ताय कदाचन॥ ४९

—*—

## एकादशोऽध्यायः

हिमालय उवाच—

देवदेवि महेशानि करुणासागरेऽम्बिके।
ब्रूहि पूजाविधिं सम्यग्यथावदधुना निजम्॥ १

श्रीदेव्युवाच—

वक्ष्ये पूजाविधिं राजन्नम्बिकाया यथाप्रियम्।
अत्यन्तश्रद्धया सार्धं शृणु पर्वतपुङ्गव॥ २
द्विविधा मम पूजा स्याद्बाह्या चाभ्यान्तराऽपि च।
बाह्याऽपि द्विविधा प्रोक्ता वैदिकी तान्त्रिकी तथा॥ ३
वैदिक्यर्चाऽपि द्विविधा मूर्तिभेदेन भूधर।
वैदिकी वैदिकैः कार्या वेददीक्षासमन्वितैः॥ ४
तन्त्रोक्तदीक्षावद्भिस्तु तान्त्रिकी संश्रिता भवेत्।
इत्थं पूजारहस्यं च न ज्ञात्वा विपरीतकम्॥ ५
करोति यो नरो मूढः स पतत्येव सर्वथा।
तत्र या वैदिकी प्रोक्ता प्रथमां तां वदाम्यहम्॥ ६
यन्मे साक्षात् परं रूपं दृष्टवानसि भूधर।
अनन्तशीर्षनयनमनन्तचरणं महत्॥ ७
सर्वशक्तिसमायुक्तं प्रेरकं यत् परात्परम्।
तदेव पूजयेन्नित्यं तन्मे ध्यायेत् स्मरेदपि॥ ८
इत्येतत् प्रथमार्चायाः स्वरूपं कथितं नग।
शान्तः समाहितमना दम्भाहङ्कारवर्जितः॥ ९
तत्परो भव तद्याजी तदेव शरणं व्रज।
तदेव चेतसा पश्य जप ध्यायस्व सर्वदा॥ १०

अनन्यया प्रेमयुक्तभक्त्या मद्भावमाश्रितः।
यज्ञैर्यज तपोदानैर्मामेव परितोषय॥ ११
इत्थं ममाऽनुग्रहतो मोक्ष्यसे भवबन्धनात्।
मत्परा ये मदासक्तचित्ता भक्तवरा मताः॥ १२
प्रतिजाने भवादस्मादुद्धराम्यचिरेण तु।
ध्यानेन कर्मयुक्तेन भक्तिज्ञानेन वा पुनः॥ १३
प्राप्याऽहं सर्वथा राजन् न तु केवलकर्मभिः।
धर्मात् सञ्जायते भक्तिर्भक्त्या सञ्जायते परम्॥ १४
श्रुतिस्मृतिभ्यामुदितं यत्स धर्मः प्रकीर्तितः।
अन्यशास्त्रेण यः प्रोक्तो धर्माभासः स उच्यते॥ १५
सर्वज्ञात् सर्वशक्तेश्च मत्तो वेदः समुत्थितः।
अज्ञानस्य ममाभावादप्रमाणा न च श्रुतिः॥ १६
स्मृतयश्च श्रुतेरर्थं गृहीत्वैव च निर्गताः।
मन्वादीनां श्रुतीनां च ततः प्रामाण्यमिष्यते॥ १७
क्वचित् कदाचित् तन्त्रार्थकटाक्षेण परोदितम्।
धर्मं वदन्ति सोंऽशस्तु नैव ग्राह्योऽस्ति वैदिकैः॥ १८
अन्येषां शास्त्रकर्तॄणामज्ञानप्रभवत्वतः।
अज्ञानदोषदुष्टत्वात् तदुक्तेर्न प्रमाणता॥ १९
तस्मान्मुमुक्षुर्धर्मार्थं सर्वथा वेदमाश्रयेत्।
राजाज्ञा च यथा लोके हन्यते न कदाचन॥ २०
सर्वेशान्या ममाज्ञा सा श्रुतिस्त्याज्या कथं नृभिः।
मदाज्ञारक्षणार्थं तु ब्रह्मक्षत्रियजातयः॥ २१

मया सृष्टास्ततो ज्ञेयं रहस्यं मे श्रुतेर्वचः ।
यदा यदा हि धर्मस्य ग्लानिर्भवति भूधर ।। २२
अभ्युत्थानमधर्मस्य तदा वेषान् बिभर्म्यहम् ।
देवदैत्यविभागश्चाप्यत एवाभवन्नृप ।। २३
ये न कुर्वन्ति तद्धर्मं तच्छिक्षार्थं मया सदा ।
सम्पादितास्तु नरकास्त्रासो यच्छ्रवणाद्भवेत् ।। २४
यो वेदधर्ममुज्झित्य धर्ममन्यं समाश्रयेत् ।
राजा प्रवासयेद्देशान्निजादेतानधर्मिणः ।। २५
ब्राह्मणैर्न च सम्भाष्याः पङ्क्तिग्राह्या न च द्विजैः ।
अन्यानि यानि शास्त्राणि लोकेऽस्मिन् विविधानि च ।। २६
श्रुतिस्मृतिविरुद्धानि तामसान्येव सर्वशः ।
वामं कापालकं चैव कौलकं भैरवागमः ।। २७
शिवेन मोहनार्थाय प्रणीतो नान्यहेतुकः ।
दक्षशापाद् भृगोः शापाद्दधीचस्य च शापतः ।। २८
दग्धा ये ब्राह्मणवरा वेदमार्गबहिष्कृताः ।
तेषामुद्धरणार्थाय सोपानक्रमतः सदा ।। २९
शैवाश्च वैष्णवाश्चैव सौराः शाक्तास्तथैव च ।
गाणपत्या आगमाश्च प्रणीताः शङ्करेण तु ।। ३०
तत्र वेदाविरुद्धोंऽशोऽप्युक्त एव क्वचित् क्वचित् ।
वैदिकैस्तद्ग्रहे दोषो न भवत्येव कर्हिचित् ।। ३१
सर्वथा वेदभिन्नार्थे नाधिकारी द्विजो भवेत् ।
वेदाधिकारहीनस्तु भवेत् तत्राधिकारवान् ।। ३२

तस्मात् सर्वप्रयत्नेन वैदिको वेदमाश्रयेत्।
धर्मेण सहितं ज्ञानं परं ब्रह्म प्रकाशयेत्॥ ३३
सर्वैषणाः परित्यज्य मामेव शरणं गताः।
सर्वभूतदयावन्तो मानाहङ्कारवर्जिताः॥ ३४
मच्चित्ता मद्गतप्राणा मत्स्थानकथने रताः।
संन्यासिनो वनस्थाश्च गृहस्था ब्रह्मचारिणः॥ ३५
उपासन्ते सदा भक्त्या योगमैश्वरसंज्ञितम्।
तेषां नित्याभियुक्तानामहमज्ञानजं तमः॥ ३६
ज्ञानसूर्यप्रकाशेन नाशयामि न संशयः।
इत्थं वैदिकपूजायाः प्रथमाया नगाधिप॥ ३७
स्वरूपमुक्तं सङ्क्षेपाद् द्वितीयाया अथो ब्रुवे।
मूर्तौ वा स्थण्डिले वाऽपि तथा सूर्येन्दुमण्डले॥ ३८
जलेऽथ वा बाणलिङ्गे यन्त्रे वाऽपि महापटे।
तथा स्त्रीहृदयाम्भोजे ध्यात्वा देवीं परात्परम्॥ ३९
सगुणां करुणापूर्णां तरुणीमरुणारुणाम्।
सौन्दर्यसारसीमान्तां सर्वावयवसुन्दरीम्॥ ४०
शृङ्गाररससम्पूर्णां सदा भक्तार्तिकातराम्।
प्रसादसुमुखीमम्बां चन्द्रखण्डशिखण्डिनीम्॥ ४१
पाशाङ्कुशवराभीतिधरामानन्दरूपिणीम्।
पूजयेदुपचारैश्च यथावित्तानुसारतः॥ ४२
यावदान्तरपूजायामधिकारो भवेन्नहि।
तावद्बाह्यामिमां पूजां श्रयेज्जाते तु तां त्यजेत्॥ ४३

आभ्यन्तरा तु या पूजा सा तु संविल्लयः स्मृतः ।
संविदेव परं रूपमुपाधिरहितं मम ॥ ४४
अतः संविदि मद्रूपे चेतः स्थाप्यं निराश्रयम् ।
संविद्रूपातिरिक्तं तु मिथ्या मायामयं जगत् ॥ ४५
अतः संसारनाशाय साक्षिणीमात्मरूपिणीम् ।
भावयेन्निर्मनस्केन योगयुक्तेन चेतसा ॥ ४६
अतः परं बाह्यपूजाविस्तारः कथ्यते मया ।
सावधानेन मनसा शृणु पर्वतसत्तम ॥ ४७

—*—

## द्वादशोऽध्यायः

श्रीदेव्यावाच—

प्रातरुत्थाय शिरसि संस्मरेत् पद्ममुज्ज्वलम् ।
कर्पूराभं स्मरेत् तत्र श्रीगुरुं निजरूपिणम् ॥ १
सुप्रसन्नं लसद्भूषाभूषितं शक्तिसंयुतम् ।
नमस्कृत्य ततो देवीं कुण्डलीं संस्मरेद्बुधः ॥ २
प्रकाशमानां प्रथमे प्रयाणे प्रतिप्रयाणेऽप्यमृतायमानाम् ।
अन्तःपदव्यामनुसञ्चरन्तीमानन्दरूपामबलां प्रपद्ये ॥ ३
ध्यात्वैवं तच्छिखामध्ये सच्चिदानन्दरूपिणीम् ।
मां ध्यायेदथ शौचादिक्रियाः सर्वाः समापयेत् ॥ ४
अग्निहोत्रं ततो हुत्वा मत्प्रीत्यर्थं द्विजोत्तमः ।
होमान्ते स्वासने स्थित्वा पूजासङ्कल्पमाचरेत् ॥ ५
भूतशुद्धिं पुरा कृत्वा मातृकान्यासमेव च ।
हृल्लेखामातृकान्यासं नित्यमेव समाचरेत् ॥ ६

मूलाधारे हकारं च हृदये च रकारकम्।
भ्रूमध्ये तद्वदीकारं ह्रीङ्कारं मस्तके न्यसेत्॥ ७
तत्तन्मन्त्रोदितानन्यान् न्यासान् सर्वान् समाचरेत्।
कल्पयेत् स्वात्मनो देहे पीठं धर्मादिभिः पुनः॥ ८
ततो ध्यायेन्महादेवीं प्राणायामैर्विजृम्भिते।
हृदम्भोजे मम स्थाने पञ्चप्रेतासने बुधः॥ ९
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।
एते पञ्च महाप्रेताः पादमूले मम स्थिताः॥ १०
पञ्चभूतात्मका ह्येते पञ्चावस्थात्मका अपि।
अहं त्वव्यक्तचिद्रूपा तदतीताऽस्मि सर्वथा॥ ११
ततो विष्टरतां याताः शक्तितन्त्रेषु सर्वदा।
ध्यात्वैवं मानसैर्भोगैः पूजयेन्मां जपेदपि॥ १२
जपं समर्प्य श्रीदेव्यै ततोऽर्घ्यस्थापनं चरेत्।
पात्रासादनकं कृत्वा गुरून् नत्वा ततः परम्॥ १३
जलेन तेन मनुना चास्त्रमन्त्रेण देशिकः।
दिग्बन्धं च पुरा कृत्वा गुरून् नत्वा ततः परम्॥ १४
तदनुज्ञां समादाय बाह्यपीठे ततः परम्।
हृदिस्थां भावितां मूर्तिं मम दिव्यां मनोहराम्॥ १५
आवाहयेत्ततः पीठे प्राणस्थापनविद्यया।
आसनावाहने चार्घ्यं पाद्याद्याचमनं तथा॥ १६
स्नानं वासोद्वयं चैव भूषणानि च सर्वशः।
गन्धपुष्पं यथायोग्यं दत्त्वा देव्यै स्वभक्तितः॥ १७

यन्त्रस्थानामावृतीनां पूजनं सम्यगाचरेत्।
प्रतिवारमशक्तानां शुक्रवारे नियम्यते ॥ १८
मूलदेवीप्रभारूपाः स्मर्तव्या अङ्गदेवताः।
तत्प्रभापटलव्याप्तं त्रैलोक्यं च विचिन्तयेत् ॥ १९
पुनरावृत्तिसहितां मूलदेवीं च पूजयेत्।
गन्धादिभिः सुगन्धैस्तु तथा पुष्पैः सुवासितैः ॥ २०
नैवेद्यैस्तर्पणैश्चैव ताम्बूलैर्दक्षिणादिभिः।
तोषयेन्मां त्वत्कृतेन नाम्नां साहस्रकेण च ॥ २१
कवचेन च सूक्तेनाऽहं रुद्रेभिरिति प्रभो।
देव्यथर्वशिरोमन्त्रैर्हृल्लेखोपनिषद्भवैः ॥ २२
महाविद्यामहामन्त्रैस्तोषयेन्मां मुहुर्मुहुः।
क्षमापयेज्जगद्धात्रीं प्रेमार्द्रहृदयो नरः ॥ २३
पुलकाङ्कितसर्वाङ्गैर्बाष्परुद्धाक्षिनिःस्वनः।
नृत्यगीतादिघोषेण तोषयेन्मां मुहुर्मुहुः ॥ २४
वेदपारायणैश्चैव पुराणैः सकलैरपि।
प्रतिपाद्या यतोऽहं वै यस्मात् तैस्तोषयेच्च माम् ॥ २५
निजं सर्वस्वमपि मे सदेहं नित्यशोऽर्पयेत्।
नित्यहोमं ततः कुर्याद् ब्राह्मणांश्च सुवासिनीः ॥ २६
वटुकान्पामरानन्यान् देवीबुद्ध्या तु भोजयेत्।
नत्वा पुनः स्वहृदये व्युत्क्रमेण विसर्जयेत् ॥ २७
सर्वं हृल्लेखया कुर्यात्पूजनं मम सुव्रत।
हृल्लेखा सर्वमन्त्राणां नायिका परमा स्मृता ॥ २८

हृल्लेखादर्पणे नित्यं अहं तत्प्रतिबिम्बिता।
तस्माद्धृल्लेखया दत्तं सर्वमन्त्रैः समर्पितम्॥ २९
गुरुं सम्पूज्य भूषाद्यैः कृतकृत्यत्वमावहेत्।
य एवं पूजयेद्देवीं श्रीमद्भुवनसुन्दरीम्॥ ३०
न तस्य दुर्लभं किञ्चित् कदाचित् क्वचिदस्ति हि।
देहान्ते तु मणिद्वीपं मम यात्येव सर्वथा॥ ३१
ज्ञेयो देवीस्वरूपोऽसौ देवा नित्यं नमन्ति तम्।
इति ते कथितं राजन् महादेव्याः प्रपूजनम्॥ ३२
विमृश्यैतदशेषेणाप्यधिकारानुरूपतः।
कुरु मे पूजनं तेन कृतार्थस्त्वं भविष्यसि॥ ३३
इदं तु गीताशास्त्रं मे नाशिष्याय वदेत् क्वचित्।
नाभक्ताय प्रदातव्यं न धूर्ताय च दुर्हृदे॥ ३४
एतत् प्रकाशनं मातुरुद्घाटनमुरोजयोः।
तस्मादवश्यं यत्नेन गोपनीयमिदं सदा॥ ३५
देयं भक्ताय शिष्याय ज्येष्ठपुत्राय चैव हि।
सुशीलाय सुवेषाय देवीभक्तियुताय च॥ ३६
श्राद्धकाले पठेदेतद् ब्राह्मणानां समीपतः।
तृप्तास्तत्पितरः सर्वे प्रयान्ति परमं पदम्॥ ३७
व्यास उवाच—
इत्युक्त्वा सा भगवती तत्रैवाऽन्तरधीयत।
देवाश्च मुदिताः सर्वे देवीदर्शनतोऽभवन्॥ ३८
ततो हिमालये जज्ञे देवी हैमवती तु सा।
या गौरीति प्रसिद्धाऽऽसीद्दत्ता सा शङ्कराय च॥ ३९

ततः स्कन्दः समुद्भूतस्तारकस्तेन घातितः ।
समुद्रमन्थने पूर्वं रत्नान्यासुर्नराधिप ।। ४०
तत्र देवैः स्तुता देवी लक्ष्मीप्राप्त्यर्थमादरात् ।
तेषामनुग्रहार्थाय निर्गता तु रमा ततः ।। ४१
वैकुण्ठाय सुरैर्दत्ता तेन तस्य शमोऽभवत् ।
इति ते कथितं राजन् देवीमाहात्म्यमुत्तमम् ।। ४२
गौरी-लक्ष्म्योः समुत्पत्तिविषयं सर्वकामदम् ।
न वाच्यं त्वेतदन्यस्मै रहस्यं कथितं यतः ।। ४३
गीता रहस्यभूतेयं गोपनीया प्रयत्नतः ।
सर्वमुक्तं समासेन यत्पृष्टं तत् त्वयाऽनघ ।
पवित्रं पावनं दिव्यं किं भूयः श्रोतुमिच्छसि ।।

—*—

# श्रीदक्षिणामूर्तिसहस्रनामावलिः

ध्यानम्— स्फटिकरजतवर्णं मौक्तिकीमक्षमालां
अमृतकलशविद्यां ज्ञानमुद्रां कराब्जैः ।
दधतमुरगकक्षं चन्द्रचूडं त्रिणेत्रं
विबुधमुरगभूषं दक्षिणामूर्तिमीडे ॥

ओं दयावते नमः । दक्षिणामूर्तये । चिन्मुद्रांकितपाणये । बीजाक्षराङ्गाय । बीजात्मने । बृहते । ब्रह्मणे । बृहस्पतये । मुद्रातीताय । मुद्रायुक्ताय । मानिने । मानविवर्जिताय । मीनकेतुजयिने । मेषवृषादिगणवर्जिताय । मह्यादिमूर्तये । मानार्हाय । मायातीताय । मनोहराय । अज्ञानध्वंसकाय । विध्वस्ततमसे नमः । २०

वीरवल्लभाय नमः । उपदेष्ट्रे । उमार्धाङ्गाय । उकारात्मने । उडुनिर्मलाय । तत्त्वोपदेष्ट्रे । तत्त्वज्ञाय । तत्त्वमर्थस्वरूपवते । ज्ञानिगम्याय । ज्ञानरूपाय । ज्ञातृज्ञेयस्वरूपवते । वेदान्तवेद्याय । वेदात्मने । वेदार्थात्मप्रकाशकाय । वह्निरूपाय । वह्निधराय । वर्षमासविवर्जिताय । सनकादिगुरवे । सर्वस्मै । सर्वाज्ञान-विभेदकाय नमः । ४०

ओं सात्त्विकाय नमः । सत्त्वसंपूर्णाय । सत्याय । सत्यप्रियाय । स्तुताय । यूने । यवप्रियाय । यष्ट्रे । यष्टव्याय । यष्टिधारकाय । यज्ञप्रियाय । यज्ञतनवे । यायजूकसमर्चिताय । सते । समाय । सद्गतये । स्तोत्रे । समानाधिकवर्जिताय । क्रतवे । क्रियावते नमः । ६०

ओं कर्मज्ञाय नमः । कपर्दिने । कलिवारणाय । वरदाय । वत्सलाय । वाग्मिने । वशस्थितजगत्त्रयाय । वटमूलनिवासिने ।

वर्तमानाय । वशिनै । वराय । भूमिष्ठ ाय । भूतिदाय । भूताय । भूमिरूपाय । भुवःपतये । आर्तिघ्नाय । कीर्तिमते । कीर्त्याय । कृताकृतजगद्गुरवे नमः । ८०

जङ्गमस्वस्तरवे नमः । जह्नुकन्यालङ्कृतमस्तकाय । कट ाक्षकिङ्करीभूत ब्रह्मोपेन्द्राय। कृताकृताय। दमिने। दयाघनाय अदम्याय। अनघाय। घनगलाय। घनाय। विज्ञानात्मने। विराजे। वीराय । प्रज्ञानघनाय । ईक्षित्रे । प्राज्ञाय । प्राज्ञार्चितपदाय । पाशच्छे त्रे। अपराङ् मुखाय। विश्वाय नमः । १००

ओं विश्वेश्वराय नमः । वेत्त्रे । विनयाराध्यविग्रहाय। पाशाङ्कुशलसत्पाणये । पाशभृद्वन्दिताय । प्रभवे । अविद्यानाशकाय। विद्यादायकाय। विधिवर्जिताय। त्रिणेत्राय। त्रिगुणाय। त्रेतायै। तैजसाय। तेजसां निधये। रसाय। रसात्मने। रस्यात्मने । राकाचन्द्रसमप्रभाय। तत्त्वमस्यादि वाक्यार्थ प्रकाशनपरायणाय। ज्योतीरूपाय नमः। १२०

ओं जगत्स्रष्ट्रे नमः । जङ्गमाजङ्गमप्रभवे । अन्तर्यामिणे । मन्त्ररूपाय। मन्त्रतन्त्रविभागकृते । ज्ञानदाय । अज्ञानदाय । ज्ञात्रे । ज्ञानाय। ज्ञेयाय। ज्ञपूजिताय। विश्वकर्मणे। विश्वहृद्याय। विज्ञात्रे । विविधाकृतये। बहवे। बहुगुणाय। ब्रह्मणे। अब्रह्मणे। अबाह्याय नमः । १४०

ओं अबृहते नमः । बलिने । दयालवे । दनुजारातये । दमिताशेषदुर्जनाय । दुःखहन्त्रे । दुर्गतिघ्नाय । दुष्ट दूराय । दुरङ्कुशाय। सर्वरोगहराय । शान्ताय । समाधिकविवर्जिताय । अन्तर्यामिणे । अतसीपुष्पसदृशच्छ विकन्धराय । कालाय । कालान्तकाय। कल्याय। कलहान्तकृते। ईश्वराय। कवये नमः। १६०

ओं कविवरस्तुत्याय नमः। कलिदोषविनाशकृते। ईशाय। ईक्षापूर्वसृष्टिकर्त्रे। कर्त्रे। क्रियान्वयिने। प्रकाशरूपाय। पापौघहन्त्रे। पावकमूर्तिमते। आकाशात्मने। आत्मवते। आत्मने। लिङ्गदक्षिणदिक्स्थिताय। अलिङ्गाय। लिङ्गरूपाय। लिङ्गवते। लङ्घितान्तकाय। लयिने। लयप्रदाय। लेत्रे नमः। १८०

ओं पार्थदिव्यास्त्रदाय नमः। पृथवे। कृशानुरेतसे। कृत्तारये। कृताकृतजगत्तनवे। दह्राय। अहरहःस्तुत्याय। सनन्दनवरप्रदाय। शम्भवे। शशिकलाचूडाय। शम्याककुसुमप्रियाय। शाश्वताय। श्रीकराय। श्रोत्रे। शरीरिणे। श्रीनिकेतनाय। श्रुतिप्रियाय। श्रुतिसमाय। श्रुताय। श्रुतवतां वराय नमः। २००

ओं अमोघाय नमः। अनतिगम्याय। अर्च्याय। मोहघ्नाय। मोक्षदाय। मुनये। अर्थकृते। प्रार्थिताशेषदात्रे। अर्थाय। अर्थवतां वराय। गन्धर्वनगरप्रख्याय। गगनाकारवते। गतये। गुणहीनाय। गुणिवराय। गणिताशेषविष्टपाय। परमात्मने। पशुपतये। परमार्थाय। पुरातनाय नमः। २२०

ओं पुरुषार्थप्रदाय नमः। पूज्याय। पूर्णाय। पूर्णेन्दुसुन्दराय। परस्मै। परगुणाय। अपार्थाय। पुरुषोत्तमसेविताय। पुराणाय। पुण्डरीकाक्षाय। पण्डिताय। पण्डितार्चिताय। वञ्चनादूरगाय। वायवे। वासिताशेषविष्टपाय। षड्वर्गजिते। षड्गुणकाय। षण्ढताविनिवारकाय। षट्कर्मभूसुराराध्याय। षष्टिकृते नमः। २४०

ओं षण्मुखाङ्ककाय नमः। महेश्वराय। महामायाय। महारूपाय। महागुणाय। महावीर्याय। महाधैर्याय। महाकर्मणे। महाप्रभवे। महापूज्याय। महास्थानाय। महादेवाय। महाप्रियाय।

महानटाय। महाभूषाय। महाबाहवे। महाबलाय। महातेजसे। महाभूताय। महाताण्डवकृते नमः। २६०

ओं महते नमः। फालेक्षणाय। फणधराकल्पाय। फुल्लाब्जलोचनाय। महाकैलासनिलयाय। महात्मने। मौनवते। मृदवे। शिवाय। शिवङ्कराय। शूलिने। शिवलिङ्गाय। शिवाकृतये। शिवभस्मधराय। अशान्ताय। शिवरूपाय। शिवाप्रियाय। ब्रह्मविद्यात्मकाय। ब्रह्मक्षत्रवैश्यप्रपूजिताय। भवानीवल्लभाय नमः। २८०

ओं भव्याय नमः। भवारण्यदवानलाय। भद्रप्रियाय। भद्रमूर्तये। भावुकाय। भविनां प्रियाय। सोमाय। सनत्कुमारेड्याय। साक्षिणे। सोमावतंसकाय। शङ्कराय। शङ्खधवलाय। अशरीरिणे। शीतदर्शनाय। पर्वाराधनसन्तुष्टाय। शर्वाय। सर्वतनवे। सुमिने। भूतनाथाय। भूतभव्यविपन्नाशनतत्पराय नमः। ३००

ओं गुरुवरार्चनप्रीताय नमः। गुरवे। गुरुकृपाकराय। अघोराय। घोररूपात्मने। वृषात्मने। वृषवाहनाय। अवृषाय। अनुपमाय। अमायाय। अकृताय। अर्काग्नीन्दुनेत्रवते। धर्मोपदेष्ट्रे। धर्मज्ञाय। धर्माधर्मफलप्रदाय। धर्मार्थकामदाय। धात्रे। विधात्रे। विश्वसन्नुताय। भस्मालङ्कृतसर्वाङ्गाय नमः। ३२०

ओं भस्मिताशेषविष्टपाय नमः। छान्दोग्योपनिषद्गम्याय। छन्दोगपरिनिष्ठिताय। छन्दः स्वरूपाय। छन्दात्मने। आच्छादिताकाशाय। ऊर्जिताय। शर्कराक्षीरसंपकचणकान्न-प्रियाय। शिशवे। सूर्याय। शशिने। कुजाय। सौम्याय। जीवाय। काव्याय। शनैश्चराय। सैंहिकेयाय। केतूभूताय। नवग्रहमयाय। नुताय नमः। ३४०

ओ नमोवाकप्रियाय नमः। नेत्रे। नीतिमते। नीतविष्टपाय। नवाय। अनवाय। नवर्षिस्तुत्याय। नीतिविशारदाय। ऋषिमण्डलसंवीताय। ऋणहर्त्रे। ऋतप्रियाय। रक्षोघ्नाय। रक्षित्रे रात्रिश्चरप्रतिभयस्मृतये। भर्गाय। वर्गोत्तमाय। भात्रे। भवरोगचिकित्सकाय। भगवते। भानुसदृशाय नमः। ३६०

ओं भावज्ञाय नमः। भावसंस्तुताय। बलारातिप्रियाय। विल्वपल्लवार्चनतोषिताय। धगद्धगन्नृत्तपराय। धुत्तूरकुसुम-प्रियाय। द्रोणरूपाय। द्रवीभूताय। द्रोणपुष्पप्रियाय। द्रुताय। द्राक्षासदृशवागाढ्याय। दाडिमीफलतोषिताय। दृशे। दृगात्मने। दृशांद्रष्ट्रे। दरिद्रजनवल्लभाय। वात्सल्यवते। वत्सरकृते। वत्सीकृतहिमालयाय। गङ्गाधराय नमः। ३८०

ओं गगनकृते नमः। गरुडासनवल्लभाय। घनकारुण्यवते। जेत्रे। घनकृते। घूर्जसार्चिताय। शरदग्धरिपवे। शूराय। शून्यरूपाय। शुचिस्मिताय। दृश्याय। अदृश्याय। दरीसंस्थाय। दहराकाशगोचराय। लतायै। क्षुपाय। तरवे। गुल्माय। वानस्पत्याय। वनस्पतये नमः। ४००

ओं शतरुद्रजपप्रीताय नमः। शतरुद्रीयघोषिताय। शताश्वमेधसंराध्याय। शतार्कसदृशस्तुतये। त्र्यम्बकाय। त्रिककुदे। त्रीद्धाय। त्रीशाय। त्रिनयनाय। त्रिपाय। त्रिलोकनाथाय। त्रात्रे। त्रिमूर्तये। त्रिविलासवते। त्रिभङ्गिने। त्रिदशश्रेष्ठाय। त्रिदिवस्थाय। त्रिकारणाय। त्रिनाचिकेजाय। त्रितपसे नमः। ४२०

ओं त्रिवृत्करणपण्डिताय नमः। धाम्ने। धामप्रदाय। अधाम्ने। धन्याय। धनपतेः सुहृदे। आकाशाय। अद्भुतसंकाशाय।

प्रकाशजितभास्कराय । प्रभावते । प्रस्थवते । पात्रे । पारिप्लवविवर्जिताय । हराय । स्मरहराय । हर्त्रे । हतदैत्याय । हितार्पणाय । प्रपञ्चरहिताय । पञ्चकोशात्मने नमः । ४४०

ओं पञ्चताहराय नमः । कूटस्थाय । कूपसदृशाय । कुलीनाच्र्याय । कुलप्रभाय । दात्रे । आनन्दमयाय । अदीनाय । देवदेवाय । दिगात्मकाय । महामहिमवते । मात्रे । मालिकाय । मान्त्रवर्णिकाय । शास्त्रतत्वाय । शास्त्रसाराय । शास्त्रयोनये । शशिप्रभाय । शान्तात्मने । शारदाराध्याय नमः । ४६०

ओं शर्मदाय नमः । शान्तिदाय । सुहृदे । प्राणदाय । प्राणभृते । प्राणाय । प्राणिनां हितकृते । पणाय । पुण्यात्मने । पुण्यकृल्लभ्याय । पुण्यापुण्यफलप्रदाय । पुण्यश्लोकाय । पुण्यगुणाय । पुण्यश्रवणकीर्तनाय । पुण्यलोकप्रदाय । पुण्याय । पुण्याढ्याय । पुण्यदर्शनाय । बृहदारण्यकगताय । अभूताय नमः । ४८०

ओं भूतादिपादवते नमः । उपासित्रे । उपास्यरूपाय । उभिद्रकमलार्चिताय । उपांशुजपसुप्रीताय । उमार्धाङ्गशरीरवते । पञ्चाक्षरीमहामन्त्रोपदेष्ट्रे । पञ्चवक्त्रकाय । पञ्चाक्षरीजपप्रीताय । पञ्चाक्षर्यधिदेवतायै । बलिने । ब्रह्मशिरश्छेत्रे । ब्राह्मणाय । ब्राह्मणश्रुताय । अशठाय । अरतये । अक्षुद्राय । अतुलाय । अक्लीबाय । अमानुषाय नमः । ५००

ओं अन्नदाय नमः । अन्नप्रभवे । अन्नाय । अन्नपूर्णासमीडिताय । अनन्ताय । अनन्तसुखदाय । अनङ्गरिपवे । आत्मदाय । गुहां प्रविष्टाय । गुह्यात्मने । गुहताताय । गुणाकराय । विशेषणविशिष्टाय । विशिष्टात्मने । विशोधनाय । अपांसुलाय । अगुणाय । अरागिणे । काम्याय । कान्ताय नमः । ५२०

ओं कृतागमाय नमः । श्रुतिगम्याय । श्रुतिपराय । श्रुतोपनिषदां गतये। निचाय्याय। निर्गुणाय। नीताय। निगमाय। निगमान्तगाय। निष्कलाय । निर्विकल्पाय । निर्विकाराय । निराश्रयाय । नित्यशुद्धाय। नित्यमुक्ताय । नित्यतृप्ताय । निरात्मकाय। निकृतिज्ञाय। नीलकण्ठाय। निरुपाधये नमः ५४०

ओं निरीतिकाय नमः । अस्थूलाय। अनणवे। अह्रस्वाय। अनुमानेतरस्मै । असमाय । अद्भ्यः । अपहृतपाप्मने । अलक्ष्यार्थाय। अलङ्कृताय । ज्ञानस्वरूपाय । ज्ञानात्मने । ज्ञानाभासदुरासदाय। अत्त्रे। सत्तापहृते। सत्तायै। प्रत्ताप्रत्ताय। प्रमेयजिते। अन्तराय। अन्तरकृते नमः । ५६०

ओं मन्त्रे नमः । प्रसिद्धाय। प्रमथाधिपाय। अवस्थिताय। असंभ्रान्ताय। अभ्रान्ताय। अभ्रान्तव्यवस्थिताय। खड्वाङ्गधृते। खड्गधृताय । मृगधृते । डमरुन्दधते । विद्योपास्याय । विराड्रूपाय। विश्ववन्द्याय । विशारदाय । विरिञ्चिजनकाय । वेद्याय। वेदाय। वेदैकवेदिताय। अपदाय नमः । ५८०

ओं जवनाय नमः । अपाणये। ग्रहीत्रे। अचक्षुषे। ईक्षकाय। अकर्णाय। आकर्णयित्रे। अनासाय। घ्रात्रे। बलोद्धताय। अमनसे। मननैकगम्याय। अबुद्धये। बोधयित्रे। बुधाय। ओं। तस्मै। सते। असते। आधाय्याय नमः । ६००

क्षराय नमः । अक्षराय। अव्ययाय। चेतनाय। अचेतनाय। चिते। यस्मै। कस्मै। क्षेमाय। कलालियाय। कलाय। एकस्मै। अद्वितीयाय। परमाय ब्रह्मणे । आद्यन्तनिरीक्षकाय । आपद्ध्वान्तरवये । पापमहावनकुठारकाय । कल्पान्तदृशे । कल्पकराय। कलिनिग्रहवन्दनाय नमः । ६२०

ओं कपोलविजितादर्शाय नमः। कपालिने। कल्पपादपाय। अम्भोधरसमाय। कुम्भोद्भवमुख्यर्षिसन्नुताय। जीवितान्तकराय। जीवाय। जङ्गालाय। जनिदुःखहृते। जात्यादिशून्याय। जन्मादिवर्जिताय। जन्मखण्डनाय। सुबुद्धये। बुद्धिकृते। बोद्धे। भूम्ने। भूभारहारकाय। भुवे। धुरे। जुरे नमः। ६४०

ओं गिरे नमः। स्मृतये। मेधायै। श्रीधाम्ने। श्रियै। ह्रियै। भियै। अस्वतन्त्राय। स्वतन्त्रेशाय। स्मृतमात्राघनाशनाय। चर्माम्बरधराय। चण्डाय। कर्मिणे। कर्मफलप्रदाय। अप्रधानाय। प्रधानात्मने। परमाणवे। परात्मवते। प्रणवार्थोपदेष्ट्रे। प्रणवार्थाय नमः। ६६०

ओं परन्तपाय नमः। पवित्राय। पावनाय। अपापाय। पापनाशनवन्दनाय। चतुर्भुजाय। चतुर्दंष्ट्राय। चतुरक्षाय। चतुर्मुखाय। चतुर्दिगीशसंपूज्याय। चतुराय। चतुराकृतये। हव्याय। होत्राय। हविषे। द्रव्याय। हवनार्थजुहूमयाय। उपभृते। स्वधितये। स्फ्यात्मने नमः। ६८०

ओं हवनीयपशवे नमः। विनीताय। वेषधृते। विदुषे। वियते। विष्णवे। वियद्गतये। रामलिङ्गाय। रामरूपाय। राक्षसान्तकराय। रसाय। गिरये। नद्यै। नदाय। अम्भोधये। ग्रहेभ्यः। ताराभ्यः। नभसे। दिग्भ्यः। मरवे नमः। ७००

ओं मरीचिकायै नमः। अध्यासाय। मणिभूषाय। मनवे। मतये। मरुद्भ्यः। परिवेष्टृभ्यः। कण्ठेमरकतद्युतये। स्फटिकाभाय। सर्पधराय। मनोमयाय। उदीरिताय। लीलामयजगत्सृष्टये। लीलाशयसुदूरगाय। सृष्ट्यादिस्थितये। अव्यक्ताय। केवलात्मने। सदाशिवाय। सल्लिङ्गाय। सत्पथस्तुत्याय नमः। ७२०

ओं स्फोटात्मने नमः । पुरुषायाव्ययाय । परम्परागताय । प्रातः । सायं । रात्रये । मध्याह्नाय । कलाभ्यः । निमेषेभ्यः । काष्ठाभ्यः । मुहूर्तेभ्यः । प्रहरेभ्यः । दिनेभ्यः । पक्षाभ्यां । मासेभ्यः । अयनाभ्यां । वत्सराय । युगेभ्यः । मन्वन्तराय । सन्ध्यायै नमः । ७४०

ओं चतुर्मुखदिनावधये नमः । सर्वकालस्वरूपात्मने । सर्वज्ञाय । सत्कलानिधये । सन्मुखाय । सद्गुणस्तुत्याय । साध्वसाधुविवेकदाय । सत्यकामाय । कृपाराशये । सत्यसङ्कल्पाय । एधित्रे । एकाकाराय । द्विप्रकारतनुमते । त्रिलोचनाय । चतुर्बाहवे । पञ्चमुखाय । षड्गुणाय । षण्मुखप्रियाय । सप्तर्षिपूज्य-पादाब्जाय । अष्टमूर्तये नमः । ७६०

ओं अरिष्टदाय नमः । नवप्रजापतिकराय । दशादिक्षुप्रपूजिताय । एकादशरुद्रात्मने । द्वादशादित्यसंस्तुताय । त्रयोदशद्वीपयुक्तमहीमण्डलविश्रुताय । चतुर्दशमनुस्रष्ट्रे । चतुर्दशसमद्धयाय । पञ्चदशाहात्मपक्षान्तराधनीयकाय । विलसत्षोडशकलापूर्णचन्द्रसमप्रभाय । मिलत्सप्तदशांगाढ्यलिङ्ग देहाभिमानवते । अष्टादशमहापर्वभारतप्रतिपादिताय । एकोन-विंशतिमहायज्ञसंस्तुतसद्गुणाय । विंशतिप्रथितक्षेत्रनिवासिने । वंशवर्धनाय । त्रिंशद्दिनात्ममासान्तपितृपूजनतर्पिताय । चत्वारिंशत्समधिकपञ्चाहार्चादितर्पिताय । पञ्चाशद्वत्सरातीत ब्रह्मनित्यप्रपूजिताय । पूर्णषष्ट्यब्दपुरुषप्रपूज्याय । पावनाकृतये नमः । ७८०

ओं दिव्यैकसप्ततियुगमन्वन्तरसुखप्रदाय नमः । अशीतिवर्षविप्रैरप्यर्चनीय पदाम्बुजाय । नवत्यधिकषट्-कृच्छ्रप्रायश्चित्तशुचिप्रियाय । शतलिङ्गाय । शतगुणाय ।

शतच्छिद्राय। शतोत्तराय । सहस्रनयनादेव्याय । सहस्र-कमलार्चिताय। सहस्रनामसंस्तुत्याय । सहस्रकिरणात्मकाय। अयुतार्चनसन्दत्तसर्वाभीष्टाय । अयुतप्रदाय। अयुताय । शतसाहस्रसुमनोऽर्चकमोक्षदाय । कोटिकोट्यण्डनाथाय । श्रीकामकोट्यर्चनप्रियाय। श्रीकामनासमाराध्याय। श्रिताभीष्ट-वरप्रदाय। वेदपारायणप्रीताय नमः। ८००

वेदवेदाङ्गपारगाय नमः । वैश्वानराय । विश्ववन्द्याय । वैश्वानरतनवे। वशिने। उपादानाय। निमित्ताय। कारणद्वय-रूपवते। गुणसाराय। गुणासाराय। गुरुलिङ्गाय। गणेश्वराय। सांख्यादियुक्त्यचलिताय । सांख्ययोगसमाश्रयाय । महस्र-शीर्षाय। अनन्तात्मने। सहस्राक्षाय। सहस्रपदे। क्षान्तये। शान्तये नमः। ८२०

ओं क्षितये नमः। कान्तये। ओजसे। तेजसे। द्युतये। निधये। विमलाय । विकलाय । वीताय । वसुने । वासवसन्नुताय । वसुप्रदाय। वसवे। वस्तुने। वक्त्रे। श्रोत्रे। श्रुतिस्मृतिभ्यां। आज्ञाप्रवर्तकाय। प्रज्ञानिधये। निधिपतिस्तुताय नमः। ८४०

ओं अनिन्दिताय नमः। अनिन्दितकृते। तनवे। तनुमतां वराय। सुदर्शनप्रदाय। सोत्रे। सुमनसे। सुमनः प्रियाय। घृतदीपप्रियाय । गम्याय । गात्रे । गानप्रियाय । गवे । पीतचीनांशुकधराय। प्रोतमाणिक्यभूषणाय। प्रेतलोकार्गला-पादाय। प्रातरब्जसमाननाय। त्रयीमयाय। त्रिलोकेड्याय। त्रयीवेद्याय नमः। ८६०

ओं त्रितार्चिताय नमः। सूर्यमण्डलसंस्थात्रे। सूरिमृग्य-पदाम्बुजाय। अप्रमेयाय। अमितानन्दाय। ज्ञानमार्गप्रदीपकाय।

भक्त्यापरिगृहीताय। भक्तानामभयङ्कराय। लीलागृहीतदेहाय। लीलाकैवल्यकृत्यकृते । गजारये । गजवक्त्राङ्काय। हंसाय । हंसप्रपूजिताय। भावनाभाविताय। भर्त्रे। भारभृते। भूरिदाय। अब्रुवते। सहस्रधाम्ने नमः। ८८०

ओं द्युतिमते नमः । द्रुतजीवगतिप्रदाय । भुवनस्थितसंवेशाय। भवने भवनेऽर्चिताय । मालाकारमहा-सर्पाय। मायाशबलविग्रहाय। मृडाय । मेरुमहेष्वासाय । मृत्युसंयमकारकाय। कोटिमारसमाय। कोटिरुद्रसंहितयाधृताय। देवसेनापति-स्तुत्याय। देवसेनाजयप्रदाय । मुनिमण्डल-संवीताय। मोहघ्ननयनेक्षणाय। मातापितृसमाय। मानदायिने। मानिसुदुर्लभाय। शिवमुख्यावताराय । शिवाद्वैतप्रकाशकाय नमः। ९००

ओं शिवनामावलिस्तुत्याय नमः । शिवङ्करपदार्चनाय। करुणावरुणावासाय । कलिदोषमलापहाय । गुरुक्रौर्यहराय । गौरसर्षपप्रीतमानसाय । पायसान्नप्रियाय । प्रेमनिलयाय । अयाय। अनिलाय। अनलाय। वर्धिष्णवे। वर्धकाय। वृद्धाय। वेदान्तप्रतिपादिताय । सुदर्शनप्रदाय । शूराय । शूरमानिपराभविने। प्रदोषार्च्याय। प्रकृष्टेज्याय नमः। ९२०

ओं प्रजापतये नमः । इलापतये। मानसार्चनसन्तुष्टाय। मुक्तामणिसमप्रभाय। सर्वपापौघसंहर्त्रे। सर्वमौनिजनप्रियाय। सर्वाङ्गसुन्दराय। सर्वनिगमान्तकृतालयाय। सर्वक्षेत्रैकनिलयाय। सर्वक्षेत्रज्ञरूपवते । सर्वेश्वराय । सर्वघनाय । सर्वदृशे । सर्वतोमुखाय। धर्मसेतवे। सद्गतिदाय। सर्वसत्कारसत्कृताय। अर्कमण्डलसंस्थायिने। अर्कपुष्पार्चनप्रियाय। कल्पान्तशिष्टाय नमः। ९४०

ओं कालात्मने नमः । कामदाहकलोचनाय । खस्थाय । खचरसंस्तुत्याय । खगधाम्ने । रुचांपतये । उपमर्दसहाय । सूक्ष्माय । स्थूलाय । स्थात्रे । स्थितिप्रदाय । त्रिपुरारये । स्त्रियाऽयुक्ताय । आत्मानात्मविवेकदाय । संघर्षकृते । सङ्करहृते । सञ्चितागामिनाशकाय । प्रारब्धवीर्यशून्यत्वकारकाय । प्रायणान्तकाय । भवाय नमः । ९६०

ओं भूतलयस्थानाय नमः । भवघ्नाय । भूतनायकाय । मृत्युञ्जवाय । मातृसमाय । निर्मात्रे । निर्ममाय । अन्तगाय । मायायवनिकाच्छेत्रे । मायातीत्मदायकाय । सम्प्रसादाय । सत्प्रसादाय । स्वरूपज्ञानदायकाय । सुखासीनाय । सुरैः सेव्याय । सुन्दराय । मन्दिरान्तगाय । ब्रह्मविद्याम्बिकानाथाय । ब्रह्मण्याय । ब्रह्मताप्रदाय नमः । ९८०

ओं अग्रगण्याय नमः । अनतिग्राह्याय । अच्युताय । अच्युतसमाश्रयाय । अहंब्रह्मेत्यनुभवसाक्षिणे । अक्षिनिलयाय । अक्षयाय । प्राणापानात्मकाय । प्राणिनिलयाय । प्राणवत्प्रभवे । अनन्यार्थश्रुतिगणाय । अनन्यसदृशाय । अन्वयिने । स्तोत्रपारायणप्रीताय । सर्वाभीष्टफलप्रदाय । अपमृत्युहराय । भक्तसौख्यकृते । भक्तभावनाय । आयुःप्रदाय । रोगहराय नमः । १०००

ओं धनदाय नमः । धन्यभाविताय । सर्वाशापूरकाय । सर्वभक्तसंघेष्टदायकाय । नाथाय । नामावलीपूजाकर्तुर्दुर्गतिहारकाय । श्रीमेधादक्षिणामूर्तिगुरवे । मेधाविवर्धकाय नमः । १००८

(स्कान्दे विष्णुसंहितातः)

—*—

# अर्धनारीश्वरसहस्रनामस्तोत्रम्

ओं। अखण्डमण्डलाकारश्चाखिलाण्डैकनायिका।
अमरेन्द्रार्चितपदश्चामरारिनिषूदिनी॥ १

अनादिनिधनोऽनन्तकोटि सूर्यसमप्रभा।
अनन्तोऽनन्तभूतेशी चाजितोऽमितविक्रमा॥ २

अविनाशपदस्थेमा चावाङ्मनसगोचरा।
अनन्तकोटिकल्याणगुणोऽनन्तगुणाश्रया॥ ३

अघहा चाघसंहर्त्री चावेद्योऽदितिवन्दिता।
अपवर्गप्रदाता चैवाखिलाभीष्टदायिनी॥ ४

आदिमध्यान्तरहित आदित्यायुतभासुरा।
आगमाभ्यर्चितपद आम्नायार्थविलासिनी॥ ५

आखण्डलमुखस्तुत्य आत्मानन्दविधायिनी।
आशापालसमाराध्य आधिव्याधिविनाशिनी॥ ६

आपदद्रीन्द्रदम्भोलिरापन्नार्तिप्रभञ्जना।
आदित्यमण्डलान्तःस्थ आदिशक्तिस्वरूपिणी॥ ७

आशावराम्बरधर आशान्तैश्वर्यदायिनी।
आनन्दलहरीपूर्ण आनन्दोल्लासशालिनी॥ ८

आचान्तदुरितस्तोम आधाराधेयरूपिणी।
आध्यात्मिकाधिशमन आगोबृन्दनिवारिणी॥ ९

इन्दिरापतिपूज्यांघ्रिरिन्द्रादिस्तुतवैभवा।
इभचर्माम्बरधर इभकुम्भनिभस्तनी॥ १०

इभवक्त्रमहासेनजनकश्रेष्टदायिनी।
इष्टिघ्न इष्टिकर्त्री चैवेयत्तातीतविक्रमः ॥ ११

इच्छाज्ञानक्रियाशक्तिरिच्छाकलितविग्रहः।
इन्दिराभारतीदत्तहस्तयुग्मोल्लसत्करा॥ १२

इन्द्रयज्ञसुखाराध्य इडापिङ्गलमध्यगा।
इहामुत्रसुखाराध्य इन्दुबिम्बसमानना॥ १३

इनेन्दुवह्निनयनः इन्दुचूडकुटुम्बिनी।
इन्द्रियादिगुणातीत इन्द्राणीस्तुतिमोदिता॥ १४

ईषत्स्मितमुखाम्भोज ईश्वरार्धशरीरिणी।
ईश्वरश्रेशवनिता ईड्य ईशित्वसिद्धिदा॥ १५

ईशानादिब्रह्मरूप ईहाधिकफलप्रदा।
ईकारार्थरहस्यज्ञ ईकारार्थस्वरूपिणी॥ १६

ईतिबाधाप्रशमन ईशमायाविलासिनी।
ईड्यस्तथेशजीवातुरीषणात्यक्तचेतनः ॥ १७

तथेदृगित्यसंवेद्या ईषणोर्जितदानवः।
ईशित्री चेप्सितकर ईश्वरत्वविधायिनी॥ १८

उक्षेन्द्रवाहनारूढ उत्पत्तिलयवर्जिता।
उन्नतैश्वर्यसंपन्न उत्सेधपददायिनी॥ १९

उषापतिसमाराध्य उषाकोटिसमर्चिता।
उषर्बुधाक्षिनिर्दग्धानंगश्चोरुपराक्रमा॥ २०

उग्र उग्रप्रतापा चैवोमापतिरुदारधीः।
उद्यद्भानुप्रतीकाश उन्नतस्तनमण्डला॥ २१

उग्रदानवसंहर्ता चोत्सवप्रियमानसा।
उष्णिक्छन्दःस्वरूपाढ्यश्चोरगाद्रिनिवासिनी।। २२

उदग्रश्रीरुपनिषदुद्यानचरकोकिला।
ऊर्वशीगीतसन्तुष्ट ऊर्ध्वाम्नायनिवासिनी।। २३

ऊर्ध्वरेता ऊर्ध्वगतिरूनाधिकविवर्जितः।
ऊर्ध्वाण्डजन्मधरिणी ऊर्जिताखिलशत्रुकः।। २४

ऊष्माग्निकणसन्तप्तदिनेशाग्नीन्दुफालका।
ऊचिरूचिष्मती चोर्म्य ऊरुदेशान्तमार्दवा।। २५

ऊरव्योत्तमवेषश्च ऊर्ध्वयोगातिगामिनी।
ऊनवाच्य ऊनसाम्या ऊर्ध्वताण्डवपण्डितः।। २६

ऊर्ध्वलास्यसहाया च ऊरीकृतसमस्तदः।
ऊर्जस्वन्मणिमालाढ्या ऋग्यजुःसामगायनः।। २७

ऋभुक्षास्तुतपादाब्जा ऋषिपत्नीसमर्चितः।
ऋषिराजर्षिसंसेव्या ऋषिर् ऋणविमोचिनी।। २८

ऋग्यजुःसामसारज्ञः ऋचां प्राचीति संनुता।
रुद्राक्षमालिकाभूषो रुद्राणीकोटिसेविता।। २९

रुद्रकोटिजितामित्रः ऋतुशोणाम्बरावृता।
ऋतुलक्ष्मीसहस्रेश ऋक्षराजसमानना।। ३०

ऋणत्रयविमुक्तश्च ऋणपातकनाशिनी।
ऋगादिवेदविनुतः ऋग्वेदार्थस्वरूपिणी।। ३१

ऋतुनाथसखारातिः ऋतुकालमहोज्ज्वला।
क्रूरपापपरीहारः क्रूरलोकपराङ्मुखी।। ३२

रूपनिर्जितकन्दर्पो रूपलावण्यवारिधिः ।
रूप्याचलनिवासश्च रूपयौवनशालिनी ॥ ३३

भ्रूणयोगिगणाराध्यो भ्रूणहार्तिविनाशिनी ।
भ्रूभङ्गविलसद्वक्त्रा भ्रूजितेन्द्रशरासना ॥ ३४

लुप्तकन्दर्पगात्रश्च श्लिष्टकान्तकलेवरा ।
लुण्ठितारिपुरश्चैव क्लृप्तवृत्तिसुराङ्गना ॥ ३५

लब्धभक्तिजनप्रेयान् लब्धभोगविडम्बिनी ।
लुलायवाहनारातिः लुलायासुरमर्दिनी ॥ ३६

लुब्धभस्माङ्गरागाढ्यः क्लृप्ताकल्पसमुज्ज्वला ।
लूनब्रह्मशिरा लीढमदिरामोदविह्वला ॥ ३७

क्लीब्यः क्लीङ्कारनिलया श्लाघ्यः श्लाघ्यगुणाश्रया ।
म्लानेतरमुखाम्भोजो ब्लूं बीजार्थस्वरूपिणी ॥ ३८

एणाङ्कचूड एकाक्षर्यैक एकान्तवासिनी ।
एषणारहितश्चैणलोचना चैधितोत्सवः ॥ ३९

एकान्तपूजनप्रीता एकान्तध्यानतत्परः ।
एकभोगा एकसौख्यः एकैश्वर्यप्रदायिनी ॥ ४०

एकभक्त एकगुणा एकान्ताध्वरदीक्षितः ।
एकवीरप्रभापूरनिमज्जत्प्रियमानसा ॥ ४१

एनःकान्तारदावाग्निरेकप्राभवशालिनी ।
एकसिद्ध एकक्लृप्तिः एकसृष्टिस्तथैधिता ॥ ४२

एलाकर्पूरताम्बूलप्रीत एकान्तपूजिता ।
एकविद्य एककान्ता एकभक्तिमदर्चितः ॥ ४३

ऐङ्कारबीजमात्राढ्या ऐरावतपतिस्तुतः ।
ऐरावतसमारूढा ऐन्द्रलोकसमाश्रयः ॥ ४४

ऐङ्कारशुक्तिकामुक्तामणिरैरावणार्च्चितः ।
ऐङ्कारादर्शबिम्बश्रीरैङ्कारप्रतिभूमिकः ॥ ४५

ऐङ्कारमन्त्रसर्वस्वं ऐश्वर्याधिकशोभनः ।
ऐन्द्रलोकविधात्री च ऐश्वर्याष्टकदायकः ॥ ४६

ऐं ऐंपदजपप्रीत ऐङ्कारमनुजापिका ।
ओङ्काररूप ओङ्कारनिलया ओंपदाभिधः ॥ ४७

ओजोवती तथौजस्वी ओतप्रोतविवर्जिता ।
ओषधीशार्धचूडश्च ओषधीफलदायिनी ॥ ४८

ओड्डामरेश्वराराध्य ओड्याणाभरणोज्ज्वला ।
ओं तद्ब्रह्मपदस्थेमा ओड्याणपीठवासिनी ॥ ४९

ओमित्येकाक्षरपद ओषधीशसमानना ।
ओघीकृतमहातेजा ओघत्रयविलासिनी ॥ ५०

ओङ्कारमूलिकाकन्द ओङ्कारावालवल्लरी ।
ओङ्कारगिरिहर्यक्ष ओं नमस्कारवाच्यका ॥ ५१

ओमापोज्योतिरादित्य ओड्डीशानन्दरूपिणी ।
औपम्यरहित औदार्यशालिन्यौपद्रवापहः ॥ ५२

औंकार्यौर्वानलरुचिरौन्नत्यपददायिनी ।
औपासनपरश्चौपनिषदर्थस्वरूपिणी ॥ ५३

अम्बिकापतिरम्बा च अन्तर्याम्यन्तरात्मिका ।
अण्डकोटि सहस्रेशश्चाण्डाद्ब्राह्मनिकेतना ॥ ५४

अन्धकासुरसंहारी चान्तस्तिमिरभेदिनी।
अन्तकारिरनन्तश्रीरनन्तोऽनन्तपूजिता ।। ५५

अञ्जनातनयाराध्यश्चाञ्जनार्थविधायिनी।
अङ्गीकृतमहाक्ष्वेलश्चाङ्कारोपितषण्मुखा ।। ५६

अंशुमानंशुमत्सेव्या चान्तकारारातिरङ्गना।
अष्टविद्येश्वराराध्यश्चाष्टसिद्धिविधायिनी ।। ५७

अष्टमूर्तिरष्टलक्ष्मीसेविताङ्घ्रिसरोरुहा।
अष्टाविंशागमस्तुत्यश्चाष्टत्रिंशत्कलात्मिका ।। ५८

अष्टदिक्पालसेव्याङ्घ्रिरष्टाष्टककलात्मिका।
अष्टादशपुराणज्ञश्चाष्टादशपुरीश्वरी ।। ५९

अष्टदिग्गजसंवीतश्चाष्टवर्णविलासिनी।
अष्टापदाद्रिकोदण्डश्चाष्टैश्वर्यप्रदायिनी ।। ६०

अष्टभैरवसंवीतश्चाष्टद्व्यवयोज्वला।
अष्टाक्षरीजपपरश्चाष्टवाग्देवतावृता ।। ६१

अर्धाद्रिशिखरावासश्चार्धनारीश्वरप्रिया।
अष्टाङ्गयोगनिरतश्चाष्टशक्तिपरीवृता ।। ६२

अष्टापदमहापीठः अष्टापदगिरिस्थिता।
आश्चर्यशील आश्चर्यनिलयाऽऽश्चर्य एव च ।। ६३

आश्चर्यजनिराश्चर्यनिष्ठ आश्चर्यदायिनी।
आर्तिघ्न आर्तिसंहर्त्री आकस्मिकमहोज्ज्वलः ।। ६४

कल्याणी कलिताकल्पः कल्याणाचलवासिनी।
कमनीयगुणावासः कमलाक्षसहोदरी ।। ६५

कञ्जभूजनकः कञ्जनेत्री कर्मफलप्रदः ।
कर्मकर्त्री कालकालः कन्दर्पाविहृदर्शना ॥ ६६

कन्दर्पकोटिलावण्यः कमलाक्षी कपालभृत् ।
कात्यायनी कालकालः काव्यालापविनोदिनी ॥ ६७

काव्यः कपर्दिसुखदा कैलासशिखरालयः ।
कामेश्वरालिङ्गिताङ्गी कामदः कलिनाशिनी ॥ ६८

कर्मी कामकला चैव कामकेलिविनोदनः ।
कदम्बवाटीमध्यस्था कदम्बवननायकः ॥ ६९

खड्गाङ्गादिप्रहरणा खड्गखेटकधारकः ।
खगवाहद्वयादृश्या खगराजपराक्रमः ॥ ७०

खगानेकप्रभा खेलाक्लृप्तब्रह्माण्डमण्डलः ।
खेदघ्नखेचरीयोगदायिनी खेचरेश्वरः ॥ ७१

खञ्जरीटसमच्छाया खललोकपराङ्मुखः ।
खश्यामा खगतिस्तुत्यः खातपातविनाशिनी ॥ ७२

खमूर्धजः खगगतिः खगः खगविधायिनी ।
खड्गरावणपूज्याङ्घ्रिः खगचारुपयोधरा ॥ ७३

खण्डिताशेषपाषण्डः खिन्नाभीष्टप्रदायिनी ।
गङ्गाधरो गिरिसुता गजास्यासुरसूदनः ॥ ७४

गम्भीरा गगनाकारो गजकुम्भनिभस्तनी ।
गजचर्मपरीधानो गन्धर्वकुलसेविता ॥ ७५

गिरीन्द्रचापो गीर्वाणसन्नुता गानलोलुपः ।
गुहेभवक्त्रजननी गुह्यकेशसखो गुरुः ॥ ७६

गुह्यकाराध्यचरणो गणनाथा गभीरधीः ।
गण्या गुरुर्गुणातीता गुणज्ञो गुणमातृका ॥ ७७

गोविन्दो गोपिकाराध्या गोपतिर्गोमती तथा ।
गन्धर्वरूपो गन्धर्वकन्याकोटिसमर्चिता ॥ ७८

घनो घनागमश्यामा घनप्रौढो घनस्तनी ।
घृणी घृणानिधिर्घ्राणो घृताचीपूज्यपादुकः ॥ ७९

घण्टामुखसुसंप्रीतो घण्टारवविनोदिनी ।
घनीभूतप्रभापूरो घळझलितमेखला ॥ ८०

घनसारविलिप्ताङ्गो घनसारसवर्णिनी ।
घूर्णमानजगत्प्राणो घूर्णितारक्तलोचना ॥ ८१

घटोद्भवमुनिस्तुत्यो घटोद्भवकृतानतिः ।
घटोद्भवकृतस्नेहो घटाकारकुचद्वया ॥ ८२

घोरदंष्ट्राकरालास्यो घोरघोरस्वरूपिणी ।
घोषपालसहस्रेशो घोषान्तःपुरचारिणी ॥ ८३

घोषितागमसर्वस्वो घोषिताम्नायवेदिता ।
घोरपापाटवीदावो घोरपातकनाशिनी ॥ ८४

घर्मादित्यप्रतीकाशो घर्मसन्तापचन्द्रिका ।
घर्माग्निहोत्रसुप्रीतो घर्माहुतिफलप्रदा ॥ ८५

चतुरश्रगृहावासश्चतुरङ्गबलेश्वरी ।
चतुश्चक्रसमाराध्य श्चतुर्वर्गफलप्रदा ॥ ८६

चातुर्यशाली चतुरा चतुराननदेशिकः ।
चतुष्षष्टिमहादूतीयोगिनीगणसेविता ॥ ८७

चन्द्रचूडश्चन्द्रमुखी चन्द्रादित्याग्निलोचनः ।
चामीकराचलावासा चामीकरमहासनः ॥ ८८

चारुचामरहस्तश्रीशारदापरिवीजिता ।
चन्द्रिकाधवलाकारश्चक्रवाकनिभस्तनी ॥ ८९

चापीकृतमहामेरुश्चापबाणलसत्करा ।
चक्रवालाद्रिनिलयश्चक्रवाकप्रियङ्करी ॥ ९०

चक्रदानरतश्चैव चक्रराजनिकेतना ।
चारुहासमुखश्चैव चारुचन्द्रकलाधरा ॥ ९१

चिच्चिच्छक्तिश्चिद्घनश्च चिन्ताशोकविवर्जित ।
चित्राम्बरश्चित्रवेषा चित्रकृत्यश्चिदाकृतिः ॥ ९२

चर्माम्बरश्चक्रहस्ता चक्रपाणिवरप्रदः ।
चैतन्यकुसुमप्रीता चैतन्यश्चारुवादिनी ॥ ९३

चमूरुपाणिश्चांपेय नासिका चम्पकप्रियः ।
चञ्चलाक्षी चञ्चलात्मा चञ्चरीककुलालका ॥ ९४

चतुरास्यशिरश्छेत्ता चण्डासुरनिषूदिनी ।
चण्डेश्वरश्चण्डिका च चित्रकृत्यविशारदः ॥ ९५

चित्ररूपा चित्तजारिः चितिश्चिन्तितदायकः ।
छन्दोग्या छन्दसाराध्यः छन्दोराशिश्छविच्छदः ॥ ९६

छन्दोगा छान्दसाराध्यः छत्रिणी छविपञ्जरः ।
छायापतिसमाराध्या छन्दश्छायानुसारिणी ॥ ९७

छन्दोऽभ्यासैकनिरतश्छन्दोगस्तुतिमोदिनी ।
छिन्नारिवर्गसंघातश्छन्नपातकनाशिनी ॥ ९८

छद्मदैत्यकुलच्छेत्ता छायामण्डललक्षिता।
छायातपत्रसंवीतश्छन्नवीरपरिष्कृता॥ ९९

जननीजनको जेत्री जित्वरो जितमत्सरा।
जगदुज्जीवनकरो जराध्वान्तरविप्रभा॥ १००

जगत्प्राणो जगत्कर्त्री जगदाह्लाददायकः।
जनविश्रान्तिदात्री च जितकामो जयार्चिता॥ १०१

जमदग्निसमाराध्यो जमदग्निवरप्रदा।
जङ्गमाजङ्गमोत्सन्नो जङ्गमस्थावरात्मिका॥ १०२

जितामित्रो जितक्रोधा जातिवर्णविवर्जितः।
जातीचम्पकपुन्नागविलसन्नीलकुन्तला॥ १०३

साक्षी जाग्रदवस्थायाः जगद्रक्षणजाग्रती।
जम्भारिप्रमुखाराध्यो जम्भारिमणिमण्डिता॥ १०४

जातरूपाचलधनुः जगत्प्रलयसाक्षिणी।
झषादिरूपदशक सेविताङ्घ्रिसरोरुहः॥ १०५

झषाक्षी झषकेत्वङ्गदाहको झंपदाभिधा।
झर्झरारावरसिको झल्लरीवाद्यकोविदा॥ १०६

झटित्यभीष्टदाता च झलज्झलितमेखला।
झषकेत्वंगजनको झरीकृत सुभाषणा॥ १०७

ज्ञानं ज्ञप्तिर्ज्ञानरूपो ज्ञानज्ञेयविलासिनी।
ज्ञानवेद्यो ज्ञानगम्या ज्ञानदो ज्ञानसिद्धिदा॥ १०८

ज्ञानाधारो ज्ञानमुद्रा ज्ञानयज्ञपरायणः।
ज्ञानदृष्टिप्रतीता च ज्ञानदृष्टिप्रकाशकः॥ १०९

ज्ञाननिष्ठा ज्ञाननिधिः ज्ञातव्यार्थप्रकाशिनी।
ज्ञातिहीनो ज्ञानयज्ञदीक्षिता ज्ञानवृद्धिदः॥ ११०

ज्ञाननिष्ठजनप्रीता ज्ञानशास्त्रप्रवर्तकः।
ज्ञानाम्बुनिधिपूर्णेन्दुः ज्ञानामृतमहोदधिः॥ १११

ज्ञानज्ञेयज्ञातृरूपत्रिपुटीवीक्षणातिगा।
टङ्काद्यायुधसंपन्नः टङ्काराक्षररूपिणी॥ ११२

टङ्काराकारचन्द्रश्रीः टङ्कारामृतवर्षिणी।
डाकिनीशक्तिसंयुक्तो डाकिन्यादिपरिवृता॥ ११३

डिण्डिमध्वनिसुप्रीतो डाडिमीकुसुमप्रभा।
ढकावाद्यविशेषज्ञः ढकाराक्षररूपिणी॥ ११४

ताम्रस्ताम्राधरा तत्त्वं तटिद्गौरी तमोनुदः।
तरुणार्कप्रतीकाशा तरुणेन्दुशिखामणिः॥ ११५

तापत्रयाग्निशमना तारकस्ताम्रलोचना।
तरुणस्तरुणी चैव तपोमूर्तिस्त्रयीमयी॥ ११६

तापसान्तरसञ्चारी तापसीवेषधारिणी।
तारस्वरूपस्तारेशवदना ताण्डवप्रियः॥ ११७

तन्वी ताम्रजटाजूटस्तमालश्यामलाकृतिः।
त्र्यम्बकश्च त्रिकोणेशी त्रिमूर्तिस्त्रिपुराम्बिका॥ ११८

त्रिकूटज्ञस्त्रिकूटेशी त्रिविष्टपपदप्रदः।
त्र्यक्षरी त्रिगुणातीतस्त्रिदशश्रीसमावृता॥ ११९

त्रिकालज्ञस्त्रिलोकेशी त्रेताग्निस्त्रिपदात्मिका।
देवेशो दक्षिणामूर्तिर्दक्षयज्ञविनाशिनी॥ १२०

देवदानवसेव्यांघ्रिर्दरस्मेरमुखाम्बुजा।
दर्वीकरेन्द्रभूषाढ्यो दरान्दोलितलोचना॥ १२१

दिगम्बरो दयामूर्तिर्देशिको दीनवत्सला।
देशकालपरिज्ञाता देशोपद्रवनाशिनी॥ १२२

दीक्षितो दण्डनीतिस्था देवर्षिगणसेवितः।
दहराकाशनिलया दुष्टदूरो दुरासदा॥ १२३

दुःखदारिद्र्यशमनो दुराचारपराङ्मुखी।
दिनारम्भार्ककोटिश्रीः दिव्यज्ञानसुधानिधिः॥ १२४

धनेश्वरसखो धन्या धनुष्मान्धनशेवधिः।
धर्माधारो धर्मपरा धर्मो धर्मकृदाश्रया॥ १२५

धीरो धैर्यगुणोपेतो धीरोदात्तगुणोत्तरः।
धीमती धैर्यनिलयो धराधरसुता धनी॥ १२६

धर्मेतराटवीदावपावका धर्मविग्रहः।
धैर्यदात्री धैर्यशीलो धौरेयजनवत्सला॥ १२७

नागाचलेन्द्रनिलयो नागकन्यासमर्चिता।
नागेन्द्रकुण्डलधरो नागराजसुपूजिता॥ १२८

नागचर्मपरीधानो नागाननगुहप्रसूः।
नागेन्द्रहारवलयो नागमाणिक्यमण्डिता॥ १२९

नागेशाद्यमरस्तुत्यो नागस्त्रीकोटिसन्नुता।
नागारिवाहजनको नागकुम्भनिभस्तनी॥ १३०

नागेन्द्रशिखरोत्तंसो नागेन्द्रप्रियनन्दिनी।
नारायणप्रियसखो नारसिंहवपुर्धरा॥ १३१

नारदादिमुनिस्तुत्यो नामपारायणप्रिया।
निर्जरारिगणध्वंसी नित्ययौवनशालिनी॥ १३२

पञ्चब्रह्ममयः पञ्चब्रह्मसञ्चाधिशायिनी।
पञ्चयज्ञपरप्रीतः पञ्चकृत्यपरायणा॥ १३३

पञ्चाक्षरमनुप्रीतः श्रीमत्पञ्चादशाक्षरी।
पञ्चभूतनिवासश्च पञ्चपातकनाशिनी॥ १३४

पञ्चेन्द्रियविलासश्च पञ्चबाधानिवारिणी।
पञ्चपञ्चावतारश्च पञ्चाशद्वर्णरूपिणी॥ १३५

पञ्चवक्त्रः पार्वती च पञ्चवज्रासनस्थितः।
प्रपञ्चकोटिजननी प्रपञ्चोत्पत्तिवर्जितः॥ १३६

पञ्चाशत्पीठनिलया परब्रह्म परात्परा।
पञ्चयज्ञपरावासः पञ्चसंख्योपचारिणी॥ १३७

फालनेत्रः फलाधारा फलवान्फलरूपिणी।
फुल्लारविन्दनयनः फुल्लेन्दीवरलोचना॥ १३८

फालमध्यलसन्नेत्रदहनालीढमन्मथः।
फालचन्द्रकलंकश्रीकस्तूरीतिलकोज्ज्वला॥ १३९

स्फटिकाद्रिसवर्णाभः स्फटिकाक्षलसत्करा।
स्फारकीर्तिः स्फुरत्कान्तिः स्फुटगङ्गाजटाधरः॥ १४०

स्फुरन्मङ्गलसूत्राढ्या स्फुरत्ताटङ्कमण्डितः।
स्फुटाट्टहासवदनतोषितेशमनोरथा॥ १४१

फाल्गुनास्त्रोच्छिन्नशिराः फाल्गुनास्त्रप्रदायिनी।
बलभद्रार्चितो बाला बलवान् बलतोषिता॥ १४२

बलीवर्दसमारूढो बालार्ककिरणारुणा।
बडवाग्निप्रतीकाशो बाहुलेयप्रियङ्करी॥ १४३

बिल्वकान्तारमध्यस्थो बिसतन्तुसमाकृतिः।
बाणासुरार्चनप्रीतो बाणचापलसत्करा॥ १४४

बिन्दुमण्डलमध्यस्थो बिन्दुनादस्वरूपिणी।
बहुरूपश्च बिम्बोष्ठी बुद्धिज्ञेयो बुधार्चिता॥ १४५

बुध्न्यो बुद्धिप्रदा बुद्धिधनदो बिन्दुमालिनी।
भस्मोद्धूलितसर्वाङ्गो भक्तानुग्रहतत्परा॥ १४६

भवो भवानी भर्गश्च भवघ्नी भवनाशनः।
भद्रमूर्तिर्भाग्यनिधिर्भक्ताभीष्टप्रदायिनी॥ १४७

भिषग्भेषजरूपा च भक्तहार्दतमोनुदः।
भूतिदात्री भूतिभूषो भूतधात्री भवोद्भवः॥ १४८

भुवनेशी भोगिभूषो भद्रकाली भगाक्षिभित्।
महादेवी महाराज्ञी महान्मङ्गलरूपिणी॥ १४९

महामृत्युप्रशमनो महाताण्डवसाक्षिणी।
मन्त्रवेद्यो मन्त्रमयी मित्रेशो मित्ररूपिणी॥ १५०

मन्दस्मितमुखाम्भोजो मदिरामोदविह्वला।
मत्तेभचर्मवसनो मत्तमातङ्गगामिनी॥ १५१

मीढुष्टमश्च मीनाक्षी मुदितो मुक्तिदायिनी।
मूलमन्त्रस्वरूपज्ञो मूर्तिन्यासाधिदेवता॥ १५२

मृगपाणिर्मृगमदालिप्ताङ्गी मृत्युभञ्जनः।
मेनकानन्दिनी मेध्यो मेघश्यामलकुन्तला॥ १५३

यक्षराजप्रियसखो यक्षस्त्रीकोटिसेविता।
यज्ञप्रियो यज्ञभोक्त्री यज्वा याज्यश्च याजकः ॥ १५४

यमादिनियमप्रीता याम्यो यमभयापहा।
योगी योगप्रदा योग्यो योगिबृन्दसमर्चिता ॥ १५५

यमारातिर्यायजूकवत्सला युगनायकः।
यशस्विनी यजुर्वेदस्तुत्यो योषामणिस्तथा ॥ १५६

यक्षराक्षसवेतालभयघ्नो यक्षिणीश्वरी।
रक्ताद्रिशिखरावासो रक्ताक्षी रम्यभूषणः ॥ १५७

रमणीयगुणस्तोमा राकाचन्द्रनिभाननः।
राजीवदलनेत्री च रूपवान्रोगवर्जिता ॥ १५८

रूपयौवनसंपन्नो रूढयौवनशालिनी।
रेवतीपतिपूज्याङ्घ्रिः रेणुकास्तुतिमोदिनी ॥ १५९

रोमहर्षणसर्वाङ्गो रोगारण्यकुठारिका।
रूप्याचलेन्द्रनिलयो रणन्मञ्जीरनूपुरा ॥ १६०

रम्भानाट्यप्रियश्चैव रम्भास्तम्भोरुशालिनी।
रसप्रियो रसावासा रसिको रसरूपिणी ॥ १६१

ललाटाक्षो ललामश्रीविडम्बिमुकुरप्रभा।
लास्यप्रियो लास्यकर्त्री लाभालाभविवर्जितः ॥ १६२

लकुली लिङ्गरूपश्च लावण्यामृतवारिधिः।
लब्धभाग्यो लब्धपतिर्लब्धसौख्यो लसत्तनुः ॥ १६३

लोकालोकाचलावासो लोकपालसमर्चिता।
लक्ष्मीनारायणस्तुत्यो लीलाशुककरोज्ज्वला ॥ १६४

लोकरक्षैकनिरतो लाकिन्यादिपरीवृता।
लङ्कापतिसमाराध्यपादुको ललिताम्बिका॥ १६५

वामदेवो विशालाक्षी विषकण्ठो विराण्मयी(णिः)।
विरूपाक्षो विद्रुमाभा विद्युत्केशो वियत्प्रसूः॥ १६६

वेदागमपुराणज्ञो वेदान्तार्थस्वरूपिणी।
वाञ्छिताखिलदाता च वाञ्छितार्थप्रदायिनी॥ १६७

वीरभद्रो वीरमाता विश्वामित्रप्रियङ्करः।
वीरगोष्ठीप्रिया वीरो विष्णुमायाविलासिनी॥ १६८

विश्वम्भरो विश्वकर्त्री वीर्यवान् विश्वसाक्षिणी।
वौषडन्तपदस्तुत्यो वौषडन्तसमुत्सुका॥ १६९

शङ्करः शाम्भवी शम्भुः शङ्करार्धशरीरिणी।
शितिकण्ठः शिवाराध्या शिवः शिवकुटुम्बिनी॥ १७०

शिष्टेष्टदः शिष्टगतिः शुद्धवर्णः शुचिस्मिता।
शेषाद्रिशिखरावासः शेषकन्यासमर्चिता॥ १७१

श्रीमान् शृङ्गारलहरी शृङ्गारार्धकलेवरः।
श्रीप्रदा शिपिविष्टश्च श्रीकण्ठा श्रितवत्सलः॥ १७२

श्रितत्रात्री शिवपरः शिष्टः शिवपतिव्रता।
षडक्षरन्यासरूपः षट्कोणपुरवासिनी॥ १७३

षट्षष्टिकोटितीर्थज्ञः षट्त्रिंशत्तत्त्वरूपिणी।
षोढान्यासपरप्रीतः षोडशाक्षररूपिणी॥ १७४

षट्दर्शनसमासीनः षड्वर्गारिविनाशिनी।
षट्कालपूजनप्रीतः षडाम्नायाधिदेवता॥ १७५

षड्वक्त्रजनकश्चैव षट्चक्रपुरनायिका।
षड्गवेषधरः षड्गवेषलोकपराङ्मुखी ॥ १७६

षाड्गुण्यपरिपूर्णश्च षड्गुणातीतविग्रहा।
षडम्बुरुहचक्रश्रीः षष्ठीशमयरूपिणी ॥ १७७

सदाशिवः सदाराध्या सर्वज्ञः सर्वसाक्षिणी।
सकलागमसंस्तुत्यः सर्वलोकवशङ्करी ॥ १७८

सर्वेश्वरश्च सावित्री संवित्संविद्विलासिनी।
सदाचारपरप्रीतः सौमङ्गल्यविवर्धिनी ॥ १७९

सर्वसौभाग्यजनकः साध्वी साधुजनप्रियः।
सौन्दर्यलहरी चैव सौरमन्त्रप्रकाशनः ॥ १८२

सौरदर्शनसेव्याङ्घ्रिः सौख्यदः सौख्यशालिनी।
सौहार्दनिलयश्चैव सौहित्यप्रियमानसः ॥ १८३

सर्वपातकसंहारी सर्वधर्मप्रवर्धिनी।
सोमः सौम्यगुणा सत्यः सत्यज्ञानपरायणा ॥ १८४

हालाहलाङ्कितग्रीवो हेलालालितमन्मथा।
हेरम्बतातो हेमाद्रिनिलया हिमशैलगः ॥ १८५

हयमेधसमाराध्या हयग्रीवमुखस्तुतः।
हत्यादिदुरिताघघ्नी हरो हरिसहोदरी ॥ १८६

हिरण्यगर्भजनको हिरण्यमणिकुण्डला।
हिरण्यरेता हेमाङ्गी तथा हेमसभापतिः ॥ १८७

हेमकुम्भस्तननता हंसनामपदस्तुतः।
हंसकालपदस्तुत्या हकारो हंसिकागतिः ॥ १८८

हस्तिचर्माम्बरधरो हस्तिगा हतशात्रवः ।
हर्यृक्षवाहना हंसो हंसमन्त्रप्रकाशिनी ।। १८९

प्रळयार्कप्रभापूरः प्रळयाग्निसमप्रभा ।
प्रळयाम्बुधिनिर्घोषः प्रळयानिलवेगिनी ।। १९०

व्याळेन्दुकुण्डलधरो व्याळारिध्वजसोदरी ।
काळकण्ठः कळालापः कळापतिशिखमणिः ।। १९१

काळी काळिन्दिसंसेव्यः काळरात्रितपस्विनी ।
कळानिधिः काळकण्ठीपञ्चमाराववाङ्मयी ।। १९२

कळङ्करहितः काळमेघश्यामलकुन्तला ।
क्षमाधरेन्द्रजामाता क्षमाभृद्वरनन्दिनी ।। १९३

क्षपानाथार्धमकुटः क्षपानाथसमानना ।
क्षमानिधिः क्षमापूज्या क्षमाकान्तः क्षमावती ।। १९४

क्षामक्षामः क्षाममध्या क्षिप्रजित् क्षिप्रसिद्धिदा ।
क्षुद्रेतरप्रसन्नात्मा क्षुद्रशून्यविनाशिनी ।। १९५

क्षेत्रेश्वरः क्षेत्रकरी क्षेत्रवृद्धः क्षयापहा ।
क्षेमङ्करः क्षणप्रीता क्षणदाचरभञ्जनः ।। १९६

क्षयवृद्धिविहीना च क्षेत्रज्ञः क्षेत्रवासिनी ।
क्षयापस्मारशमनः क्षेत्रपालसुपूजिता ।। १९७

क्षणपूजाप्रसन्नात्मा क्षौमाम्बर परिष्कृता ।
क्षुद्ररोगापहारी च क्षुद्रकृत्यपराङ्मुखा ।। १९८
क्षोणीरथसमारूढः क्षोभिणी क्षोभदायकः ।
अकारादिक्षकारान्तवर्णमालाविभूषणः ।। १९९

आखण्डलादिगीर्वाणगणाराधितपादुका।
इनशीतांशुदहनलोचनश्रेष्टसिद्धिदा॥ २००

ईड्य ईषत्स्मितमुखी उद्यत्सूर्यसमप्रभः।
ऊर्ध्वाम्नायसमारूढा ऋणत्रयविमोचकः॥ २०१

रूपनिर्जितकन्दर्पो लुब्धकीरूपधारिणी।
लुब्धकाङ्गसमाविष्ट एषणारहितार्चिता॥ २०२

एकाधिपत्य फलदः ऐहिकामुष्मिकप्रदा।
ओङ्कारमन्त्रसर्वस्वः औदार्यगुणशालिनी॥ २०३

अम्बिकाप्राणदयितो अन्नपूर्णेश्वरेश्वरी।
अर्धाद्रिशिखरावास अर्धनारीनरेश्वरी॥

अर्धाद्रिशिखरावासार्धनारीश्वरमूर्तये नमः॥ ओं॥

—*—

# अर्धनारीश्वरसहस्रनामावलिः

ओं। अखण्डमण्डलाकाराय नमः। अखिलाण्डैकनायिकायै। अमरेन्द्रार्चितपदाय। अमरारिनिषूदिन्यै। अनादिनिधनाय। अनन्तकोटिसूर्यसमप्रभायै। अनन्ताय। अनन्तभूतेश्यै। अजिताय। अमितविक्रमायै। अविनाशपदस्थेम्ने। अवाङ्मनसगोचरायै। अनन्तकोटिकल्याणगुणाय। अनन्तगुणाश्रयायै। अघघ्ने।अघसंहर्त्र्यै। अवेद्याय। अदितिवन्दितायै। अपवर्गप्रदात्रे। अखिलाभीष्टदायिन्यै नमः। २०

आदिमध्यान्तरहिताय नमः। आदित्यायुतभासुरायै। आगमाभ्यर्चितपदाय। आम्नायार्थविलासिन्यै। आखण्डलमुखस्तुत्याय। आत्मानन्दविधायिन्यै। आशापालसमाराध्याय।

आधिव्याधिविनाशिन्यै । आपददीन्द्रदम्भोलये । आपन्नार्तिप्रभञ्जनायै । आदित्यमण्डलान्तःस्थाय । आदिशक्तिस्वपिरूण्यै । आशावरांबरधराय । आशान्तैश्वर्यदायिन्यै । आनन्दलहरीपूर्णाय । आनन्दोल्लासशालिन्यै । आचान्तदुरितस्तोमाय । आधाराधेयरूपिण्यै । आध्यात्मिकाधिशमनाय । आगोबृन्दनिवारिण्यै नमः । ४०

इन्दिरापतिपूज्याङ्घ्रये नमः । इन्द्रादिस्तुतवैभवायै । इभचर्माम्बरधराय । इभकुम्भनिभस्तन्यै । इभवक्त्रमहासेनजनकाय । इष्टदायिन्यै । इष्टिघ्नाय । इष्टिकर्त्र्यै । इयत्तातीतविक्रमाय । इच्छाज्ञानक्रियाशक्त्यै । इच्छाकलितविग्रहाय । इन्दिराभारतीदत्तहस्तयुग्मोल्लसत्करायै । इन्द्रयज्ञसुखाराध्याय । इडापिङ्गलमध्यगायै । इहामुत्रसुखाराध्याय । इन्दुबिम्बसमाननायै । इनेन्दुवह्निनयनाय । इन्दुचूडकुटुम्बिन्यै । इन्द्रियादिगुणातीताय । इन्द्राणीस्तुतिमोदितायै नमः । (६०)

ओं ईषत्स्मितमुखाम्भोजाय नमः । ईश्वरार्धशरीरिण्यै । ईश्वराय । ईशवनितायै । ईड्याय । ईशित्वसिद्धिदायै । ईशानादिब्रह्मरूपाय । ईहाधिकफलप्रदायै । ईकारार्थरहस्यज्ञाय । ईकारार्थस्वरूपिण्यै । ईतिबाधाप्रशमनाय । ईशमायाविलासिन्यै । ईड्याय । ईशजीवातवे । ईषणात्यक्तचेतनाय । ईदृगित्यसंवेद्यायै । ईषणोर्जितदानवाय । ईशित्र्यै । ईप्सितकराय । ईश्वरत्वविधायिन्यै नमः । (८०)

उक्षेन्द्रवाहनारूढाय नमः । उत्पत्तिलयवर्जितायै । उन्नतैश्वर्यसंपन्नाय । उत्सेधपददायिन्यै । उषापतिसमाराध्याय । उषाकोटिसमर्चितायै । उषर्बुधाक्षिनिर्दग्धानङ्गाय । उरुपराक्रमायै । उग्राय । उग्रप्रतापायै । उमापतये । उदारधिये ।

उद्यद्भानुप्रतीकाशाय । उन्नतस्तनमण्डलायै । उग्रदानवसंहर्त्रे । उत्सवप्रियमानसायै । उष्णिक्छन्दः स्वरूपाढ्याय । उरगाद्रि-निवासिन्यै । उदग्रश्रिये । उपनिषदुद्यानचरकोकिलायै नमः । (१००)

ओं ऊर्वशीगीतसन्तुष्टाय नमः । ऊर्ध्वाम्नायनिवासिन्यै । ऊर्ध्वरेतसे । ऊर्ध्वगत्यै । ऊनाधिकविवर्जिताय । ऊर्ध्वाण्डजन्म-धारिण्यै । ऊर्जिताखिलशत्रुकाय । ऊष्माग्निकणसन्तप्त-दिनेशाग्नीन्दुफालकायै । ऊचिषे । ऊचिष्मत्यै । ऊर्म्याय । ऊरुदेशान्तमार्दवायै । ऊरव्योत्तमवेषाय । ऊर्ध्वयोगातिगामिन्यै । ऊनवाच्याय । ऊनसाम्यायै । ऊर्ध्वताण्डवपण्डिताय । ऊर्ध्वलास्यसहायायै । ऊरीकृतसमस्तदाय । ऊर्जस्वन्मणि मालाढ्यायै नमः (१२०)

ओं ऋग्यजुःसामगायनाय नमः । ऋभुक्षास्तुतपादाब्जायै । ऋषिपत्नीसमर्चिताय । ऋषिराजर्षिसंवेद्यायै । ऋषये । ऋण-विमोचिन्यै । ऋग्यजुःसामसारज्ञाय । ऋचां प्राचीतिसन्नुतायै । रुद्राक्षमालिकाभूषाय । रुद्राणीकोटिसेवितायै । रुद्रकोटि-जितामित्राय । ऋतुशोणाम्बरावृतायै । ऋतुलक्ष्मीसहस्रेशाय । ऋक्षराजसमाननायै । ऋणत्रयविमुक्ताय । ऋणपातकनाशिन्यै । ऋगादिवेदविनुताय । ऋग्वेदार्थस्वरूपिण्यै । ऋतुनाथसखारातये । ऋतुकालमहोज्ज्वलायै नमः (१४०)

ओं क्रूरपापपरीहाराय नमः । क्रूरलोकपराङ्मुख्यै । रूपनिर्जितकन्दर्पाय । रूपलावण्यवारिधये । रूप्याचल-निवासाय । रूपयौवनशालिन्यै । भ्रूणयोगिगणाराध्याय । भ्रूणहार्तिविनाशिन्यै । भ्रूभङ्गविलसद्वक्त्राय । भ्रूजितेन्द्र-शरासनायै । लुप्तकन्दर्पगात्राय । श्लिष्टकान्तकलेबरायै ।

लुण्ठितारिपुराय । क्लृप्तवृत्तिसुराङ्गनायै । लब्धभक्ति प्रेयसे । लब्धभोगविडम्बिन्यै । लुलायवाहनारातये । लुलायासुरमर्दिन्यै । लुब्धभस्माङ्गरागाढ्याय । क्लृप्ताकल्पसमुज्वलायै नमः । १६०

ओं लूनब्रह्मशिरसे नमः । लीढमदिरामोदविह्वलायै । क्लीब्याय । क्लींकारनिलयायै । श्लाघ्याय । श्लाघ्यगुणाश्रयायै । म्लानेतरमुखाम्भोजाय । ब्लूं बीजार्थस्वरूपिण्यै । एणाङ्कचूडाय । एकाक्षर्यै । एकस्मै । एकान्तवासिन्यै । एषणारहिताय । एणलोचनायै । एधितोत्सवाय । एकान्तपूजनप्रीतायै । एकान्तध्यानतत्पराय । एकभोगायै । एकसौख्याय । एकैश्वर्यप्रदायिन्यै नमः । १८०

ओं एकभक्ताय नमः । एकगुणायै । एकान्ताध्वरदीक्षिताय । एकवीरप्रभापूरनिमज्जत्प्रियमानसायै । एनःकान्तारदावाग्नये । एकप्राभवशालिन्यै । एकसिद्धाय । एकक्लृप्त्यै । एकसृष्टये । एधितायै । एलाकर्पूरताम्बूलप्रीताय । एकान्तपूजितायै । एकविद्याय । एककान्तायै । एकभक्तिमदर्च्चिताय । ऐंकारबीजमात्राढ्यायै । ऐरावतपतिस्तुताय । ऐरावतसमारूढायै । ऐन्द्रलोकसमाश्रयाय । ऐङ्कारशुक्तिकामुक्तामणये नमः । २००

ओं ऐरावणार्च्चिताय नमः । ऐंकारादर्शबिम्बश्रियै । ऐङ्कारप्रतिभूमिकाय । ऐंकारमन्त्रसर्वस्वायै । ऐश्वर्याधिक-शोभनाय । ऐन्द्रलोकविधात्र्यै । ऐश्वर्याष्टकदायकाय । ऐं । ऐंपदजपप्रीताय । ऐङ्कारमनुजापिकायै । ओंकाररूपाय । ओङ्कारनिलयायै । ओं पदाभिधाय । ओजोवत्यै । ओजस्विने । ओतप्रोतविवर्जितायै । ओषधीशार्धचूडाय । ओषधीफलदायिन्यै । ओङ्कामरेश्वराराध्याय । ओड्याणाभरणोज्वलायै नमः । २२०

ओं ओंतद्ब्रह्मपदस्थेम्ने नमः । ओड्याणपीठवासिन्यै । ओमित्येकाक्षरपदाय । ओषधीशसमाननायै । ओघीकृतमहातेजसे ।

ओघत्रयविलासिन्यै। ओङ्कारमूलिकाकन्दाय। ओङ्कारावालवल्लर्यै। ओङ्कारगिरिहर्यृक्षाय । ओं नमस्कार वाच्यकायै । ओमापोज्योतिरादित्याय । ओङ्कीशानन्दरूपिण्यै । औपम्यरहिताय। औदार्यशालिन्यै। औपद्रवापहाय। औङ्कार्यै। और्वानलरुचये । औन्नत्यपददायिन्यै । औपासनपराय । औपनिषदर्थस्वरूपिण्यै नमः। २४०

ओं अम्बिकापतये नमः । अम्बायै । अन्तर्यामिणे । अन्तरात्मिकायै। अण्डकोटिसहस्रेशाय। अण्डाद्बाह्यनिकेतनायै। अन्धकासुरसंहारिणे । अन्तस्तिमिरभेदिन्यै । अन्तकारये । अनन्तश्रियै ।अनन्ताय । अनन्तपूजितायै । अञ्जनातनयाराध्याय। अञ्जनार्थविधायिन्यै । अङ्गीकृतमहाक्ष्वेलाय । अङ्कारोपितषण्मुखायै। अंशुमते। अंशुमत्सेव्यायै। अन्तकारातये। अङ्गनायै नमः। २६०

अष्टविद्येश्वराराध्याय नमः । अष्टसिद्धिविधायिन्यै । अष्टमूर्तये । अष्टलक्ष्मीसेविताङ्घ्रिसरोरुहायै । अष्टविंशागमस्तुत्याय । अष्टत्रिंशत्कलात्मिकायै । अष्टदिक्पालसेव्यांघ्रये । अष्टाष्टककलात्मकायै। अष्टादशपुराणज्ञाय। अष्टादशपुरीश्वर्यै। अष्टदिग्गजसंवीताय । अष्टवर्णविलासिन्यै। अष्टापदाद्रिकोदण्डाय । अष्टैश्वर्यप्रदायिन्यै । अष्टभैरवसंवीताय । अष्टद्व्यवयोज्वलायै। अष्टाक्षरीजपपराय। अष्टवाग्देवतावृतायै। अर्धाद्रिशिखरावासाय। अर्धनारीश्वरप्रियायै नमः। २८०

अष्टाङ्गयोगनिरताय नमः। अष्टशक्तिपरीवृतायै । अष्टापदमहापीठाय। अष्टापदगिरिस्थितायै। आश्चर्यशीलाय। आश्चर्यनिलयायै। आश्चर्याय। आश्चर्यजन्यै। आश्चर्यनिष्ठाय। आश्चर्यदायिन्यै । आर्तिघ्नाय । आर्तिसंहर्त्र्यै । आकस्मिक-

महोज्ज्वलाय । कल्याण्यै । कलिताकल्पाय । कल्याणाचलवासिन्यै । कमनीयगुणावासाय । कमलाक्षसहोदर्यै । कञ्जभूजनकाय। कञ्जनेत्र्यै नमः । ३००

कर्मफलप्रदाय नमः । कर्मकर्त्र्यै । कालकालाय । कन्दर्पाविहृदर्शनायै । कन्दर्पकोटिलावण्याय । कमलाक्ष्यै । कपालभृते। कात्यायन्यै। कालकालाय। काव्यालापविनोदिन्यै। काव्याय । कपर्दिसुखदायै । कैलासशिखरालयाय । कामेश्वरालिङ्गिताङ्ग्यै । कामदाय । कलिनाशिन्यै । कर्मिणे । कामकलायै। कामकेलिविनोदनाय। कदम्बवाटीमध्यस्थायै नमः । ३२०

कदम्बवननायकाय नमः । खड्गाङ्गादिप्रहरणायै । खड्गखेटकधारकाय । खगवाहृद्वयादृश्यायै । खगराजपराक्रमाय। खगानेकप्रभायै । खेलाक्लृप्तब्रह्माण्डमण्डलाय । खेदघ्नखेचरीयोगदायिन्यै। खेचरेश्वराय। खञ्जरीटसमच्छायायै। खललोकपराङ्मुखाय । खश्यामायै । खगतिस्तुत्याय । खातपातविनाशिन्यै । खमूर्धजाय । खगगत्यै । खगाय । खगविधायिन्यै । खड्गरावणपूज्याङ्घ्रये । खगचारुपयोधरायै नमः । ३४०

ओं खण्डिताशेषपाषण्डाय नमः । खिन्नाभीष्टप्रदायिन्यै । गङ्गाधराय । गिरिसुतायै । गजास्यासुरसूदनाय । गम्भीरायै । गगनाकाराय । गजकुम्भनिभस्तन्यै । गजचर्मपरीधानाय । गन्धर्वकुलसेवितायै । गिरीन्द्रचापाय । गीर्वाणसन्नुतायै । गानलोलुपाय । गुहेभवक्त्रजनन्यै । गुह्यकेशसखाय । गुरवे । गुह्यकाराध्यचरणाय। गणनाथायै। गभीरधिये। गण्यायै नमः । ३६०

ओं गुरवे नमः । गुणातीतायै । गुणज्ञाय । गुणमातृकायै । गोविन्दाय । गोपिकाराध्यायै । गोपतये । गोमत्यै । गन्धर्वरूपाय । गन्धर्वकन्याकोटिसमर्चितायै । घनाय । घनागमश्यामायै । घनप्रौढाय । घनस्तन्यै । घृणिने । घृणानिधये । घ्राणाय । घृताचीपूज्यपादुकायै । घण्टामुखसुसंप्रीताय । घण्टाराव-विनोदिन्यै नमः । ३८०

ओं घनीभूतप्रभापूराय नमः । घलञ्जलितमेखलायै । घनसारविलिप्ताङ्गाय । घनसारसवर्णिन्यै । घूर्णमानजगत्प्राणाय । घूर्णितारक्तलोचनायै । घटोद्भवमुनिस्तुत्याय । घटोद्भवकृतानत्यै । घटोद्भवकृतस्नेहाय । घटाकारकुचद्वयायै । घोरदंष्ट्राकरालास्याय । घोरघोरस्वरूपिण्यै । घोषपालसहस्रेशाय । घोषान्तःपुरचारिण्यै । घोषितागमसर्वस्वाय । घोषिताम्नायवेदितायै । घोरपापाटवीदावाय । घोरपातकनाशिन्यै । घर्मादित्य-प्रतीकाशाय । घर्मसन्तापचन्द्रिकायै नमः । ४००

ओं घर्माग्निहोत्रसुप्रीताय नमः । घर्माहुतिफलप्रदायै । चतुरश्रगृहावासाय । चतुरङ्गबलेश्वर्यै । चतुश्चक्रसमाराध्याय । चतुर्वर्गफलप्रदायै । चातुर्यशालिने । चतुरायै । चतुराननदेशिकाय । चतुष्षष्टिमहादूतीयोगिनीगणसेवितायै । चन्द्रचूडाय । चन्द्र-मुख्यै । चन्द्रादित्याग्निलोचनाय । चामीकराचलावासायै । चामीकरमहासनाय । चारुचामरहस्तश्रीशारदापरिवीजितायै । चन्द्रिकाधवलाकाराय । चक्रवाकनिभस्तन्यै । चापीकृत-महामेरवे । चापबाणलसत्करायै नमः । ४२०

ओं चक्रवालाद्रिनिलयाय नमः । चक्रवाकप्रियंकर्यै । चक्रदानरताय । चक्रराजनिकेतनायै । चारुहास मुखाय ।

चारुचन्द्रकलाधरायै । चिते । चिच्छक्तये । चिद्घनाय । चिन्ताशोकविवर्जितायै । चित्राम्बराय । चित्रवेषायै । चित्रकृत्याय । चिदाकृत्यै । चर्माम्बराय । चक्रहस्तायै । चक्रपाणिवरप्रदाय। चैतन्यकुसुमप्रीतायै। चैतन्याय। चारुवादिन्यै नमः। (४४०)

ओं चमूरुपाणये नमः। चाम्पेयनासिकायै। चम्पकप्रियाय। चञ्चलाक्ष्यै । चञ्चलात्मने । चञ्चरीककुलालकायै । चतुरास्यशिरश्छेत्त्रे। चण्डासुरनिषूदिन्यै । चण्डेश्वराय । चण्डिकायै । चित्रकृत्यविशारदाय । चित्ररूपायै । चित्तजारये । चित्यै । चिन्तितदायकाय। छान्दोग्यायै। छन्दसाराध्याय। छन्दोराशये। छविच्छादाय। छन्दोगायै नमः। ४६०

ओं छान्दसाराध्याय नमः । छत्रिण्यै । छविपञ्जराय । छायापतिसमाराध्यायै । छन्दसे । छायानुसारिण्यै । छन्दोऽभ्यासैकनिरताय । छन्दोगस्तुतिमोदिन्यै । छिन्नारिवर्गसंघाताय । छन्नपातकनाशिन्यै । छद्मदैत्यकुलच्छेत्रे । छायामण्डल लक्षितायै । छायातपत्रसंवीताय । छन्नवीरपरिष्कृतायै। जननीजनकाय । जेत्र्यै । जित्वराय । जितमत्सरायै। जगदुज्जीवनकराय। जराध्वान्तरविप्रभायै नमः। ४८०

ओं जगत्प्राणाय नमः। जगत्कर्त्र्यै। जगदाह्लाददायकाय। जनविश्रान्तिदात्र्यै । जितकामाय । जयार्चितायै । जमदग्निसमाराध्याय । जमदग्निवरप्रदायै । जङ्गमाजङ्गमोत्सन्नाय । जङ्गमस्थावरात्मिकायै । जितामित्राय । जितक्रोधायै । जातिवर्णविवर्जिताय। जातीचम्पकपुन्नागविलसन्नीलकुन्तलायै। जाग्रदवस्थायाः साक्षिणे । जगद्रक्षणजाग्रत्यै । जम्भारि-

प्रमुखाराध्याय । जम्भारिमणिमण्डितायै । जातरूपाचलधनुषे । जगत्प्रलयसाक्षिण्यै नमः । ५००

ओं झषदिरूपदशकसेविताङ्घ्रिसरोरुहाय नमः । झषाक्ष्यै । झषकेत्वङ्गदाहकाय । झम्पदाभिधायै । झर्झरारावरसिकाय । झल्लरीवाद्यकोविदायै । झटित्यभीष्टदात्रे । झलज्झलितमेखलायै । झषकेत्वङ्गजनकाय । झरीकृतसुभाषणायै । ज्ञानाय । ज्ञस्यै । ज्ञानरूपाय । ज्ञानज्ञेयविलासिन्यै । ज्ञानवेद्याय । ज्ञानगम्यायै । ज्ञानदाय । ज्ञानसिद्धिदायै । ज्ञानाधाराय । ज्ञानमुद्रायै नमः । ५२०

ओं ज्ञानयज्ञपरायणाय नमः । ज्ञानदृष्टिप्रतीतायै । ज्ञानदृष्टिप्रकाशकाय । ज्ञाननिष्ठायै । ज्ञाननिधये । ज्ञातव्यार्थप्रकाशिन्यै । ज्ञातिहीनाय । ज्ञानयज्ञदीक्षितायै । ज्ञानवृद्धिदाय । ज्ञाननिष्ठजनप्रीतायै । ज्ञानशास्त्रप्रवर्तकाय । ज्ञानाम्बुनिधिपूर्णेन्दवे । ज्ञानामृतमहोदधये । ज्ञानज्ञेयज्ञातृ-रूपत्रिपुटीवीक्षणातिगायै । टङ्काद्यायुधसंपन्नाय । टङ्काराक्षर-रूपिण्यै । टङ्काराकारचन्द्रश्रिये । टङ्कारामृतवर्षिण्यै । डाकिनीशक्तिसंयुक्ताय । डाकिन्यादिपरीवृतायै नमः । ५४०

ओं डिण्डिमध्वनिसुप्रीताय नमः । डाडिमीकुसुमप्रभायै । ढक्कावाद्यविशेषज्ञाय । ढकाराक्षररूपिण्यै । ताम्राय । ताम्राधरायै । तत्त्वाय । तटिद्गौर्यै । तमोनुदाय । तरुणार्कप्रतीकाशायै । तरुणेन्दुशिखामणये । तापत्रयाग्निशमनायै । तारकाय । ताम्रलोचनायै । तरुणाय । तरुण्यै । तपोमूर्तये । त्रयीमय्यै । तापसान्तरसञ्चारिणे । तापसीवेषधारिण्यै नमः । ५६०

ओं तारस्वरूपाय नमः । तारेशवदनायै । ताण्डवप्रियाय । तन्व्यै । ताम्रजटाजूटाय । तमालश्यामलाकृत्यै । त्र्यम्बकाय ।

त्रिकोणेश्यै। त्रिमूर्तये। त्रिपुराम्बिकायै। त्रिकूटज्ञाय। त्रिकूटेश्यै। त्रिविष्टपपदप्रदाय । त्र्यक्षर्यै । त्रिगुणातीताय । त्रिदशश्री समावृतायै। त्रिकालज्ञाय। त्रिलोकेश्यै। त्रेताग्नये। त्रिपदात्मिकायै नमः। ५८०

ओं देवेशाय दक्षिणामूर्तये नमः । दक्षयज्ञविनाशिन्यै। देवदानवसेव्याङ्घ्रये। दरस्मेरमुखाम्बुजायै। दर्वीकरेन्द्रभूषाढ्याय। दरान्दोलितलोचनायै । दिगम्बराय । दयामूर्तये । देशिकाय । दीनवत्सलायै। देशकालपरिज्ञात्रे। देशोपद्रवनाशिन्यै। दीक्षिताय। दण्डनीतिस्थायै । देवर्षिगणसेविताय । दहराकाशनिलयायै । दुष्टदूराय। दुरासदायै। दुःखदारिद्र्यशमनाय। दुराचारपराङ्मुख्यै नमः। ६००

ओं दिनारम्भार्ककोटिश्रिये नमः। दिव्यज्ञानसुधानिधये। धनेश्वरसखाय। धन्यायै। धनुष्मते। धनशेवध्यै। धर्माधाराय। धर्मपरायै। धर्माय। धर्मकृदाश्रयायै। धीराय। धैर्यगुणोपेतायै। धीरोदात्तगुणोत्तराय। धीमत्यै। धैर्यनिलयाय। धराधरसुतायै। धनिने। धर्मेतराटवीदावपावकायै। धर्मविग्रहाय। धैर्यदात्र्यै नमः। ६२०

ओं धैर्यशीलाय नमः । धौरेयजनवत्सलायै । नागाचलेन्द्रनिलयाय। नागकन्यासमर्चितायै। नागेन्द्रकुण्डलधराय। नागराजसुपूजितायै। नागचर्मपरीधानाय। नागाननगुहप्रसुवे । नागेन्द्रहारवलयाय । नागमाणिक्यमण्डितायै। नागेशाद्यमरस्तुत्याय । नागस्त्रीकोटिसन्नुतायै । नागारिवाहजनकाय। नागकुम्भनिभस्तन्यै । नागेन्द्रशिखरोत्तंसाय । नागेन्द्रप्रियनन्दिन्यै। नारायणप्रियसखाय। नारसिंहवपुर्धरायै। नारदादिमुनिस्तुत्याय। नामपरायणप्रियायै नमः। ६४०

ओं निर्जरारिगणध्वंसिने नमः । नित्ययौवनशालिन्यै । पञ्चब्रह्ममयाय । पञ्चब्रह्ममञ्चाधिशायिन्यै । पञ्चयज्ञपरप्रीताय । पञ्चकृत्यपरायणायै । पञ्चाक्षरमनुप्रीताय । श्रीमत्पञ्चदशाक्षर्यै । पञ्चभूतनिवासाय । पञ्चपातकनाशिन्यै । पञ्चेन्द्रियविलासाय । पञ्चबाधानिवारिण्यै । पञ्चपञ्चावताराय । पञ्चाशद्वर्णरूपिण्यै । पञ्चवक्त्राय । पार्वत्यै । पञ्चवज्रासनस्थिताय । प्रपञ्चकोटिजनन्यै । प्रपञ्चोत्पत्तिवर्जिताय । पञ्चाशत्पीठनिलयायै नमः । ६६०

ओं परब्रह्मणे नमः । परात्परायै । पञ्चयज्ञपरावासाय । पञ्चसंख्योपचारिण्यै । फालनेत्राय । फलाधारायै । फलवते । फलरूपिण्यै । फुल्लारविन्दनयनाय । फुल्लेन्दीवरलोचनायै । फालमध्यलसन्नेत्रदहनालीढमन्मथाय । फालचन्द्रकलङ्क-श्रीकस्तूरीतिलकोज्ज्वलायै । स्फटिकाद्रिसवर्णाभाय । स्फटिका-क्षलसत्करायै । स्फारकीर्तये । स्फुरत्कान्त्यै । स्फुटगङ्गा-जटाधराय । स्फुरन्माङ्गल्यसूत्राढ्यायै । स्फुरत्ताटङ्कमण्डिताय । स्फुटाट्टहासवदनतोषितेशमनोरथायै नमः । ६८०

ओं फाल्गुनास्त्रोद्भिन्नशिरसे नमः । फाल्गुनास्त्रप्रदायिन्यै । बलभद्रार्चितायै । बालायै । बलवते । बलतोषितायै । बलीवर्दसमारूढाय । बालार्ककिरणारुणायै । बडवाग्नि-प्रतीकाशाय । बाहुलेयप्रियङ्कर्यै । बिल्वकान्तरमध्यस्थाय । बिसतन्तुसमाकृत्यै । बाणासुरार्चनप्रीताय । बाणचापलसत्करायै । बिन्दुमण्डलमध्यस्थाय । बिन्दुनादस्वरूपिण्यै । बहुरूपाय । बिम्बोष्ठ्यै । बुद्धिज्ञेयाय । बुधार्चितायै नमः । ७००

ओं बुध्याय नमः । बुद्धिप्रदायै । बुद्धिधनदाय । बिन्दुमालिन्यै । भस्मोद्धूलितसर्वाङ्गाय । भक्तानुग्रहतत्परायै । भवाय । भवान्यै । भर्गाय । भवघ्न्यै । भवनाशनाय । भद्रमूर्त्यै ।

भाग्यनिधये । भक्ताभीष्टप्रदायिन्यै । भिषजे । भेषजरूपायै । भक्तहार्दत-मोनुदाय । भूतिदात्र्यै । भूतिभूषाय । भूतधात्र्यै नमः । ७२०

ओं भवोद्भवाय नमः । भुवनेश्यै । भोगिभूषाय । भद्रकाल्यै । भवाक्षिभिदे । महादेव्यै महाराज्ञ्यै । महते । मङ्गलरूपिण्यै । महामृत्युप्रशमनाय । महाताण्डवसाक्षिण्यै । मन्त्रवेद्याय । मन्त्रमय्यै । मित्रेशाय । मित्ररूपिण्यै । मन्दस्मितमुखाम्भोजाय । मदिरामोदविह्वलायै । मत्तेभचर्मवसनाय । मत्तमातङ्गगामिन्यै । मीढुष्टमाय । मीनाक्ष्यै नमः । ७४०

ओं मुदिताय नमः । मुक्तिदायिन्यै । मूलमन्त्रस्वरूपज्ञाय । मूर्तिन्यासाधिदेवतायै । मृगपाणये । मृगमदालिप्ताङ्ग्यै । मृत्युभञ्जनाय । मेनकानन्दिन्यै । मेध्याय । मेघश्यामलकुन्तलायै । यक्षराजप्रियसखाय । यक्षस्त्रीकोटिसेवितायै । यज्ञप्रियाय । यज्ञभोक्त्र्यै । यज्वने । याज्यायै । याजकाय । यमादिनियमप्रीतायै । याम्याय । यमभयापहायै नमः । ७६०

ओं योगिने नमः । योगप्रदायै । योग्याय । योगिबृन्दसमर्चितायै । यमारातये । यायजूकवत्सलायै । युगनायकाय । यशस्विन्यै । यजुर्वेदस्तुत्याय । योषामण्यै । यक्षराक्षसवेतालभयघ्नाय । यक्षिणीश्वर्यै । रक्ताद्रिशिखरावासाय । रक्ताक्ष्यै । रम्यभूषणाय । रमणीयगुणस्तोमायै । राकाचन्द्रनिभाननाय । राजीवदलनेत्र्यै । रूपवते । रोगवर्जितायै नमः । ७८०

ओं रूपयौवनसम्पन्नाय नमः । रूढयौवनशालिन्यै । रेवतीपतिपूज्याङ्घ्रये । रेणुकास्तुतिमोदिन्यै । रोमहर्षणसर्वाङ्गाय । रोगारण्यकुठारिकायै । रूप्याचलेन्द्रनिलयाय । रणन्मञ्जीर-

नूपुरायै। रम्भानाट्यप्रियाय। रंभास्तम्भोरुशालिन्यै। रसप्रियाय। रसावासायै । रसिकाय । रसरूपिण्यै । ललाटाक्षाय । ललामश्रीविडम्बिमुकुरप्रभायै । लास्यप्रियाय । लास्यकर्त्र्यै । लाभालाभविवर्जिताय। लकुल्यै नमः। ८००

ओं लिङ्गरूपाय नमः । लावण्यामृतवारिधये । लब्धभाग्याय । लब्धपत्यै । लब्धसौख्याय । लसत्तनवे । लोकालोकाचलावासाय । लोकपालसमर्चितायै । लक्ष्मीनारायणस्तुत्याय। लीलाशुककरोज्ज्वलायै। लोकरक्षैकनिरताय। लाकिन्यादिपरीवृतायै । लङ्कापतिसमाराध्यपादुकाय । ललिताम्बिकायै । वामदेवाय । विशालाक्ष्यै । विषकण्ठाय । विराण्मय्यै(ण्यै)। विरूपाक्षाय। विद्रुमाभायै नमः। ८२०

ओं विद्युत्केशाय नमः। वियत्प्रसुवे। वेदागमपुराणज्ञाय। वेदान्तार्थस्वरूपिण्यै । वाञ्छिताखिलदात्रे । वाञ्छितार्थप्रदायिन्यै । वीरभद्राय । वीरमात्रे । विश्वामित्रप्रियङ्कराय । वीरगोष्ठीप्रियायै। वीराय। विष्णुमायाविलासिन्यै। विश्वंभराय। विश्वकर्त्र्यै । वीर्यवते । विश्वसाक्षिण्यै । वौषडन्तपदस्तुत्याय । वौषडन्तसमुत्सुकायै। शङ्कराय। शाम्भव्यै नमः। ८४०

ओं शम्भवे नमः । शङ्करार्धशरीरिण्यै । शितिकण्ठाय । शिवाराध्यायै। शिवाय। शिवकुटुम्बिन्यै। शिष्टेष्टदाय। शिष्टगत्यै। शुद्धवर्णाय । शुचिस्मितायै । शेषाद्रिशिखरावासाय । शेषकन्यासमर्चितायै। श्रीमते। शृङ्गारलहर्यै। शृङ्गारार्धकलेवराय। श्रीप्रदायै। शिपिविष्टाय। श्रीकण्ठायै। श्रितवत्सलाय। श्रितत्रात्र्यै नमः। ८६०

ओं शिवपराय शिष्टाय नमः । शिवपतिव्रतायै । षडक्षरन्यासरूपाय । षट्कोणपुरवासिन्यै । षट्षष्टिकोटि-

तीर्थज्ञाय। षट्त्रिंशत्तत्त्वरूपिण्यै । षोढान्यासपरप्रीताय । षोडशाक्षररूपिण्यै । षड्दर्शनसमासीनाय । षड्वर्गारि-विनाशिन्यै। षट्कालपूजनप्रीताय । षडाम्नायाधिदेवतायै । षड्वक्त्रजनकाय । षट्चक्रपुरनायिकायै । षड्गवेषधराय । षड्गवेषलोकपराङ्मुख्यै । षाड्गुण्यपरिपूर्णाय । षड्गुणातीत-विग्रहायै। षडम्बुरुहचक्रश्रिये। षष्ठीशमयरूपिण्यै नमः। ८८०

ओं सदाशिवाय नमः । सदाराध्यायै । सर्वज्ञाय । सर्वसाक्षिण्यै । सकलागमसंस्तुत्याय । सर्वलोकवशंकर्यै । सर्वेश्वराय । सावित्र्यै । संविदे । संविद्विलासिन्यै । सदाचारपदप्रीताय । सौमङ्गल्यविवर्धिन्यै । सर्वसौभाग्य-जनकाय। साध्व्यै । साधुजनप्रियाय । सौन्दर्यलहर्यै । सौरमन्त्रप्रकाशनाय । सौरदर्शनसेव्याङ्घ्र्यै । सौख्यदाय । सौख्यशालिन्यै नमः। ९००

ओं सौहार्दनिलयाय नमः । सौहित्यप्रियमानसायै । सर्वपातकसंहारिणे। सर्वधर्मप्रवर्धिन्यै। सोमाय। सौम्यगुणायै। सत्याय । सत्यज्ञानपरायणायै । हालाहलाङ्कितग्रीवाय । हेलालालितमन्मथायै । हेरम्बताताय । हेमाद्रिनिलयायै । हिमशैलगाय । हयमेधसमाराध्यायै । हयग्रीवमुखस्तुताय । हत्यादिदुरिताघ्न्यै। हराय। हरिसहोदर्यै। हिरण्यगर्भजनकाय। हिरण्यमणिकुण्डलायै नमः। ९२०

ओं हिरण्यरेतसे नमः । हेमाङ्ग्यै । हेमसभापतये । हेमकुम्भस्तननतायै। हंसनामपदस्तुताय। हंसकालपदस्तुत्यायै। हकाराय । हंसिकागत्यै । हस्तिचर्माम्बरधराय । हस्तिगायै । हतशात्रवाय । हर्यृक्षवाहनायै । हंसाय । हंसमन्त्रप्रकाशिन्यै । प्रळयार्कप्रभापूराय । प्रळयाग्निसमप्रभायै । प्रळयांबुदनिर्घोषाय ।

प्रळयानिलवेगिन्यै । व्यालेन्दुकुण्डलधराय । व्यालारिध्वजसोदर्यै नमः । ९४०

ओं काळकण्ठाय नमः । कळालापायै । कळापति-शिखामणये । काळ्यै । काळिन्दिसंसेवेव्याय । काळरात्रि-तपस्विन्यै । कळानिधये । कालकण्ठीपंचमाराववाङ्मय्यै । कळङ्करहितायै । काळमेघश्यामलकुन्तलायै । क्षमाधरेन्द्रजामात्रे । क्षमाभृद्वरनन्दिन्यै । क्षपानाथार्धमकुटाय । क्षपानाथसमाननायै । क्षमानिधये । क्षमापूज्यायै । क्षमाकान्ताय । क्षमावत्यै । क्षामक्षमाय । क्षाममध्यायै नमः । ९६०

ओं क्षिप्रजिते नमः । क्षिप्रसिद्धिदायै । क्षुद्रेतरप्रसन्नात्मने । क्षुद्रशून्यविनाशिन्यै । क्षेत्रेश्वराय । क्षेत्रकर्यै । क्षेत्रवृद्धाय । क्षयापहायै । क्षेमंकराय । क्षणप्रीतायै । क्षणदाचरभञ्जनाय । क्षयवृद्धिविहीनायै । क्षेत्रज्ञाय । क्षेत्रवासिन्यै । क्षयापस्मार-शमनाय । क्षेत्रपालसुपूजितायै । क्षणपूजाप्रसन्नात्मने । क्षौमाम्बरपरिष्कृतायै । क्षुद्ररोगापहारिणे । क्षुद्रकृत्यपराङ्मुखायै नमः (९८०)

क्षोणीरथसमारूढाय नमः । क्षोभिण्यै क्षोभदायिकायै । अकारादिक्षकारान्तवर्णमालाविभूषणाय । आखण्डलादि-गीर्वाणगणाराधितपादुकायै । घनशीतांशुदहनलोचनाय । इष्टसिद्धिदायै । ईड्याय । ईषत्स्मितमुख्यै । उद्यत्सूर्यसमप्रभाय । ऊर्ध्वाम्नायसमारूढायै । ऋणत्रयविमोचकाय रूपनिर्जित-कन्दर्पाय । लुब्धकीरूपधारिण्यै । लुब्धकाङ्गसमाविष्टाय । एषणारहितार्चितायै । एकाधिपत्यफलदाय । ऐहिकामुष्मिक-प्रदायै । ओङ्कारमन्त्रसर्वस्वाय । औदार्यगुणशालिन्यै ।

अम्बिकाप्राणदयिताय। अन्नपूर्णेश्वरेश्वर्यै। अर्धाद्रिशिखरावासाय अर्धनारीनरेश्वर्यै। (१००२)

*अर्धाद्रिशिखरावासार्धनारीश्वरमूर्तये नमः।*

## शिवसहस्रनामस्तोत्रम्

(ब्रह्मवायुपुराणान्तर्गतमिदं स्तोत्रं प्रायशो नामावलीत्वेन दुर्घटमिति नामपारायणे उपयुज्यते)

धर्माध्यक्षं महादेवं त्र्यक्षं तं वै प्रजापतिः।
नाम्नामष्टसहस्रेण स्तुतवान् वृषभध्वजम्॥ १

दक्ष उवाच—

नमस्ते देवदेवेश नमस्ते बलसूदन।
देवेन्द्र त्वं बलश्रेष्ठ देवदानवपूजित॥ २

सहस्राक्ष विरूपाक्ष त्र्यक्ष यक्षाधिपप्रिय।
सर्वतः पाणिपादस्त्वं सर्वतोक्षिशिरोमुखः॥ ३

सर्वतः श्रुतिमान् लोके सर्वमावृत्य तिष्ठसि।
शङ्कुकर्णो महाकर्णः कुम्भकर्णोऽर्णवालयः॥ ४

गजेन्द्रकर्णो गोकर्णः शत(पाणि)कर्णो नमोऽस्तु ते।
शतोदरः शतावर्तः शतजिह्वः सनातनः (शताननः)॥ ५

गायन्ति त्वां गायत्रिणो अर्चयन्ति ह्यकर्मिणः।
देवदानवगोप्ता च ब्रह्मा च त्वं शतक्रतुः॥ ६

मूर्तिमांस्त्वं महामूर्तिः समुद्रः सरसां निधिः।
त्वयि सर्वा देवता हि गावो गोष्ठ इवाऽऽसते॥ ७

त्वत्तः शरीरे पश्यामि सोममग्निं जलेश्वरम्।
आदित्यमथ विष्णुं च ब्रह्माणं सबृहस्पतिम्॥ ८

क्रिया करणकार्ये च कर्ता कारणमेव च।
असच्च सदसच्चैव तथैव प्रभवाप्ययौ॥ ९

नमो भवाय शर्वाय रुद्राय वरदाय च।
पशूनां पतये चैव नमोऽस्त्वन्धकघातिने। १०

त्रिजटाय त्रिशीर्षाय त्रिशूलवरधारिणे।
त्र्यम्बकाय त्रिनेत्राय त्रिपुरघ्नाय वै नमः॥ ११

नमश्चण्डाय मुण्डाय विश्वचण्डधराय च।
दण्डिने शङ्कुकर्णाय चण्डीचण्डाय वै नमः॥ १२

नमोऽर्धदण्डिकेशाय शुष्काय विकृताय च।
विलोहिताय धूम्राय नीलग्रीवाय वै नमः॥ १३

नमोऽस्त्वप्रतिरूपाय विरूपाय शिवाय च।
सूर्याय सूर्यपतये सूर्यध्वजपताकिने॥ १४

नमः प्रमथनाथाय वृषस्कन्धाय धन्विने।
नमो हिरण्यवर्णाय हिरण्यकवचाय च॥ १५

हिरण्यकृतचूडाय हिरण्यपतये नमः।
शत्रुघाताय चण्डाय पर्णसंघशयाय च॥ १६

नमः स्तुताय स्तुत्याय स्तूयमानाय वै नमः।
सर्वाय सर्वभक्षाय सर्वभूतान्तरात्मने॥ १७

नमो होमाय मन्त्राय शुक्लध्वजपताकिने।
नमोऽनम्याय नम्याय नमः किलकिलाय च॥ १८

नमस्त्वां शयमानाय शयितायोत्थिताय च।
स्थिताय धावमानाय भूताय कुटिलाय च॥ १९

नमो नर्तनशीलाय मुखवादित्रकारिणे।
बाधापहाय लुब्धाय गीतवादित्रकारिणे॥ २०

नमो ज्येष्ठाय श्रेष्ठाय बलप्रमथनाय च।
कल्पनाय च कल्प्याय क्षमायोपक्षमाय च।
उग्राय च नमो नित्यं नमश्च दशबाह्वे।। २१

नमः कपालहस्ताय चिताभस्मप्रियाय च।
विभीषणाय भीमाय भीतव्रतधराय च।। २२

नानाविकृतवक्त्राय खड्गजिह्वोग्रदंष्ट्रिणे।
पक्षमासलवाद्याय (पक्वाममांसलुब्धाय) तुम्बीवीणाप्रियाय च।। २३

नमो वृषाय वृष्याय वृष्णये वृषणाय च।
कटङ्कटाय चण्डाय नमः सावयवाय च।
नमस्ते वरकृष्णाय वराय वरदाय च।

वरगन्धमाल्यवस्त्राय वरायातिवराय च।
नमो वर्षाय वाताय छायायै आतपाय च।

नमो रक्तविरक्ताय शोभनायाक्षमलिने।
संभिन्नाय विभिन्नाय विविक्त विकटाय च।।

अघोरघोररूपाय घोराद्घोरतराय च।
नमः शिवाय शान्ताय नमः शान्ततराय च।। २४

नमो बुद्धाय शुद्धाय संविभागप्रियाय च।
प्रपञ्चाय तथोग्राय नमः सांख्यपराय च।। २५

नमश्चण्डैकघण्टाय घण्टानादाय घण्टिने।
सहस्रशतघण्टाय घण्टामालाप्रियाय च।। २६

प्राणदण्डाय नित्याय नमस्ते लोहिताय च।
हूंहूंकाराय रुद्राय हूंहूंकारप्रियाय च।। २७

नमोऽपारवते नित्यं गिरिवृक्षप्रियाय च।
मार्गमास(गर्भमांस)शृगालाय तारकाय तराय च।

नमो यज्ञाधिपतये कृताय प्रकृताय (द्रुतायोपद्रुताय) च ।। २८

यज्ञवाहाय दान्ताय तथ्याय वितथाय च ।
नमस्तटाय तव्याय तटिनीपतये नमः ।। २९

अन्नदायान्नपतये नमस्त्वन्नभुजाय च ।
नमः सहस्रशीर्षाय सहस्रचरणाय च ।। ३०

सहस्रोद्यतशूलाय सहस्रनयनाय च ।
नमो बालार्कवर्णाय बालरूपधराय च ।। ३१

नमो बालार्करूपाय बालक्रीडनकाय च ।
नमः शुद्धाय बुद्धाय क्षोभणायाक्षयाय च ।। ३२

तरङ्गाङ्कितकेशाय मुक्तकेशाय वै नमः ।
नमः षट्कर्मतुष्टाय त्रिकर्मनिरताय च ।। ३३

वर्णाश्रमाणां विधिवत्पृथग्धर्मप्रवर्तिने ।
नमः श्रेष्ठाय ज्येष्ठाय (घोषाय घोष्याय) नमः कलकलाय च ।।३४

श्वेतपिङ्गलनेत्राय कृष्णरक्तेक्षणाय च ।
धर्मकामार्थमोक्षाय क्रथाय क्रथनाय च ।। ३५

सांख्याय सांख्यमुख्याय योगाधिपतये नमः ।
नमो रथ्याधिरथ्याय चतुष्पथपथाय च ।। ३६

कृष्णाजिनोत्तरीयाय व्यालयज्ञोपवीतिने ।
ईशान रुद्रसङ्घात हरिकेश नमोऽस्तु ते ।। ३७

त्र्यम्बकायाम्बिकानाथ (अविवैकनाथाय) व्यक्ताव्यक्त नमोऽस्तु ते ।
कालकामद कामघ्न दुष्टोद्धृत्तनिवारण ।। ३८

(सर्वगर्हित सर्वज्ञ सद्योजात नमोऽस्तु ते ।
सर्व सर्वद सर्वज्ञ सन्ध्याराग नमोऽस्तु ते ।

महाबल महाबाहो महासत्व महाद्युते।
महामेघवरप्रेक्ष महाकाल नमोऽस्तु ते।

स्थूलजीर्णाङ्गजटिने वल्कलाजिनधारिणे।
दीप्तसूर्याग्निजटिने वल्कलाजिनवाससे।

सहस्रसूर्यप्रतिम तपो नित्य नमोऽस्तुते।)
उन्मादन शतावर्त गङ्गातोयार्द्रमूर्धज ।। ३९

चन्द्रावर्त युगावर्त मेघावर्त नमोऽस्तु ते।
नानार्थदानभर्त्ता च अर्थदश्च त्वमेव हि ।। ४०

(त्वमन्नमन्नकर्ता च अन्नदश्च त्वमेव हि।)

अन्नस्रष्टा च भोक्ता च यज्ञभुक् च तथानलः।
जरायुजाण्डजाश्चैव स्वेदजोद्भिज्ज एव च ।। ४१

त्वमेव देवदेवेशो भूतग्रामश्चतुर्विधः।
चराचरस्य स्रष्टा त्वं प्रतिहर्ता त्वमेव च ।। ४२

त्वमेव ब्रह्म विश्वेश अप्सु ब्रह्म वदन्ति ते।
सर्व(त्व)स्य परमा योनिः स्वधा त्वं ज्योतिषां निधिः ।। ४३

ऋक्सामानि तथोङ्कारमाहुस्त्वां ब्रह्मवादिनः।
हायि हायि हरे हायि हुवाहावेति वाऽसकृत् ।। ४४

(हविर्हावी हवो हावी हुवां वाचाहुतिः सदा।)

गायन्ति त्वां सुरश्रेष्ठाः सामगा ब्रह्मवादिनः।
यजुर्मय ऋङ्मयस्त्वं सामाथर्वयुतस्तथा ।। ४५

सेव्यसे ब्रह्मविद्भिस्त्वं कल्पोपनिषदां गणैः।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णाश्रमाश्च ये ।। ४६

त्वमेवाश्रमसंघाश्च विद्युत्स्तनितमेव च।
संवत्सरस्त्वमृतवो मासो मासार्धमेव च ।। ४७

कलाः काष्ठा निमेषाश्च नक्षत्राणि युगानि च (ग्रहाः)।
वृषाणां ककुदं त्वं हि गिरीणां शिखराणि च ॥ ४८

सिंहो मृगाणां पततां तार्क्ष्योऽनन्तश्च भोगिनाम्।
क्षीरोदो ह्युदधीनां च म(य)न्त्राणां यजु(धनु)रेव च ॥ ४९

वज्रं प्रहरणानां च व्रतानां सत्यमेव च।
त्वमेवेच्छा च द्वेषश्च रागो मोहः शमः क्षमा ॥ ५०

व्यवसायो धृतिर्लोभः कामक्रोधौ जयाजयौ।
त्वं गदी त्वं शरी चापी खट्वाङ्गी त्वं ध्वजी (झर्झरी) रथी ॥ ५१

छेत्ता भेत्ता प्रहर्ता च नेता मन्ताऽसि नो मतः।
दशलक्षणसंयुक्तो धर्मोऽर्थः काम एव च ॥ ५२

इन्द्रः समुद्रः सरितः पल्वलानि सरांसि च।
लता वल्लयस्तृणौषध्यः पशवो मृगपक्षिणः ॥ ५३

द्रव्यकर्मगुणारम्भः कालपुष्पफलप्रदः।
आदिश्चान्तश्च मध्यश्च गायत्र्योंकार एव च ॥ ५४

हरितो लोहितः कृष्णो नीलः पीतस्तथाऽरुणः।
कद्रुश्च कपिलो बभ्रुः कपोतो मेचकस्तथा ॥ ५५

सुवर्णरेता विख्यातः सुवर्णश्चाप्यथो मतः।
सुवर्णनामा च तथा सुवर्णप्रिय एव च ॥ ५६

त्वमिन्दु(न्द्र)श्च यमश्चैव वरुणो धनदोऽनलः।
उत्फुल्लश्चित्रभानुश्च स्वर्भानुर्भानुरेव च ॥ ५७

होत्रं होता च होम्यं च हुतं चैव तथा (च प्रहुतं) प्रभुः।
त्रिसौपर्णस्तथा ब्रह्म यजुषां शतरुद्रियम् ॥ ५८

पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम्।
गिरिः पापान्तको वृक्षो जीवः प्रलय(पुद्गल) एव च।

प्राणश्च त्वं (सत्वं त्वं च) रजश्च त्वं तमः सत्त्वयुतस्तथा ॥ ५९

प्राणोऽपानः समानश्च उदानो व्यान एव च।
उन्मेषश्च निमेषश्च कालः कल्पस्तथैव च ॥ ६०

लोहिताङ्गो गदी दंष्ट्री महावक्त्रो महोदरः।
शुचिरोमा हरिच्छ्मश्रुरूर्ध्वकेशश्चलाचलः (स्त्रिलोचनः) ॥

गीतवादित्रनृत्याङ्गो गीतावादनकप्रियः।
मत्स्यो जालो जलोऽजय्यो जलव्यालः कुटीचरः (जल्यो जवः
कालः कली कलः) ॥ ६२

विकालश्च सुकालश्च दुष्कालः कालनाशनः।
मृत्युश्चैवाक्षयोऽन्तश्च क्षमामा(पा)याकरोत्करः (हरः) ॥

संवर्त्तो वर्त(न्त)कश्चैव संवर्तकबलाहकौ।
घण्टाकी घण्टकी घण्टी चूडालो लवणोदधिः ॥ ६४
(घटो घटीको घण्टीको चूडालोक बलो बलम्)

ब्रह्मा कालाग्निवक्त्रश्च दण्डी मुण्डस्त्रिदण्डधृक्।
चतुर्युगश्चतुर्वेदश्चतुर्होत्रश्चतुष्पथः ॥ ६५

चातुराश्रम्यनेता च चातुर्वर्ण्यकरश्च हि।
क्षराक्षरः प्रियो धूर्तो गणैर्गण्यो गणाधिपः ॥ ६६

रक्त(रुद्राक्ष)माल्याम्बरधरो गिरीशो गिरिजाप्रियः।
शिल्पीशः शिल्पिनः श्रेष्ठः सर्वशिल्पप्रवर्तकः ॥ ६७

भगनेत्रान्तकश्चण्डः पूष्णो दन्तविनाशनः।
स्वाहा स्वधा वषट्कारो नमस्कार नमोऽस्तु ते ॥ ६८

गूढव्रतश्च गूढश्च गूढव्रतनिषेवितः।
तरणस्तारणश्चैव सर्वानुस्यूतचारणः ॥ ६९

धाता विधाता संधाता(सत्वानां) निधाता धरणी(धारणी)धरः ।
तपो ब्रह्म च सत्यं च ब्रह्मचर्यं तथाऽऽर्जवम् ॥ ७०

भूतात्मा भूतकृद्भूतो भूतभव्यभवोद्भवः ।
भूर्भुवः स्वरितश्चैव वृतो ह्यग्निर्महेश्वरः ॥ ७१

ईशानो वीक्षणः शान्तः दान्तोऽदान्तविनाशनः ।
ब्रह्मावर्तः सुरावर्तः कामावर्त नमोऽस्तु ते ।
कामबिम्बविनिर्हन्ता कर्णिकारस्रजः प्रियः ॥ ७२

गोनेता गोप्रचारश्च गोवृषेश्वरवाहनः ।
(धर्मकृद्धर्मस्रष्टा च धर्मो धर्मविदुत्तमः)
त्रैलोक्यगोप्ता गोविन्दो गोप्ता गोगर्ग एव च ॥ ७३

अखण्डचन्द्राभिमुखः (मुखचन्द्रो भीममुखः) सुमुखो दुर्मुखोऽमुखः ।
चतुर्मुखो बहुमुखो रणेष्वभिमुखः सदा ॥ ७४

हिरण्यगर्भः शकुनिर्धनदोऽन्नपतिर्विराट् ।
(हिरण्यगर्भः शकुनिर्महोदधिः परो विराट् ।)
अधर्महा महादक्षो दण्डधारी रणप्रियः ॥ ७५

तिष्ठन्स्थिरश्च स्थाणुश्च निष्कम्पश्च मुनिश्चलः ।
दुर्वारणो दुर्विषहो दुर्दर्पो दुरतिक्रमः ॥ ७६

दुर्धरो दुर्वशो नित्यो दुर्दमो विज(दुर्ज)यो जयः ।
शशः शशाङ्कनयनः शीतोष्णः क्षुत्तृषा जरा ॥ ७७

आधयो व्याधयश्चैव व्याधिहा व्याधिपश्च यः ।
सह्यो यज्ञो मृगो व्याधो व्याधीनामाकरोऽकरः ॥ ७८

शिखण्डी पुण्डरीकाक्षः पुण्डरीकावलोकनः ।
दण्डधृक्चक्रदण्डश्च रौद्रभागविनाशनः (दण्डमुण्डविभूषितः) ॥ ७९

विषपोऽमृतपश्चैव सुरापः क्षीरसोमपः ।
मधुपश्चाऽऽज्यपश्चैव सर्वपश्च महाबलः ॥ ८०

वृषाङ्कवाह्यो वृषभस्तथा वृषभलोचनः ।
वृषभश्चैव विख्यातो लोकानां लोकसंस्कृतः ॥ ८१

चन्द्रादित्यौ चक्षुषी ते हृदयं च पितामहः ।
अग्निष्टोमस्तथा देहो धर्मकर्मप्रसाधितः ॥ ८२

न ब्रह्मा न च गोविन्दः पुराणऋषयो न च ।
माहात्म्यं वेदितुं शक्ता याथातथ्येन ते शिव ॥ ८३

शिव या मूर्तयः सूक्ष्मास्ता मह्यं यान्तु दर्शनम् ।
ताभिर्मां सततं रक्ष पिता पुत्रमिवौरसम् ॥ ८४

रक्ष मां रक्षणीयोऽहं तवानघ नमोऽस्तुते ।
भक्तानुकम्पी भगवन्भक्तश्चाहं सदा त्वयि ॥ ८५

यः सहस्राण्यनेकानि पुंसामावृत्य दुर्दशाम् ।
तिष्ठत्येकः समुद्रान्ते स मे गोप्ताऽस्तु नित्यशः ॥ ८६

जितनिद्रा जितश्वासाः सत्वस्थाः समदर्शिनः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ ८७

संभक्ष्य सर्वभूतानि युगान्ते समुपस्थिते ।
यः शेते जलमध्यस्थस्तं प्रपद्येऽम्बुशायिनम् ॥ ८८

प्रविश्य वदनं राहोर्यः सोमं पिबते निशि ।
ग्रसत्यर्कं च स्वर्भानुर्भूत्वा सोमाग्निरेव च ॥ ८९

अङ्गुष्ठमात्राः पुरुषा देहस्थाः सर्वदेहिनाम् ।
रक्षन्तु ते च मां नित्यं नित्यं चाऽऽप्याययन्तु माम् ॥ ९०

येनाप्युत्पदिता देवाः पञ्चत्वं च गताश्च ये ।
ये चाप्युत्पतिता गर्भादधोभागगताश्च ये ।

तेषां स्वाहा स्वधा चैव अहस्त्वाश्च स्तुवन्ति च ।। ९१

यत्रारोहन्ति देहस्थाः प्राणिनोऽवतरन्ति च ।
हर्षयन्ति न कृष्यन्ति नमस्तेभ्योऽस्तु नित्यशः ।। ९२

ये समुद्रे नदीदुर्गे पर्वतेषु गुहासु च ।
वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ।। ९३

चतुष्पथेषु रथ्यासु कान्तारेषु सभासु च ।
हस्त्यश्वरथशालासु जीर्णोद्यानालयेषु च ।। ९४

येषु पञ्चसु भूतेषु दिशासु विदिशासु च ।
चन्द्रार्कयोर्मध्यगता ये च चन्द्रार्करश्मिषु ।।

रसातलगता ये च ये च तस्मात्परं गताः ।
नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्योस्तु नित्यशः ।। ९६

(स्थूलाः सूक्ष्माः कृशा ह्रस्वा नमस्तेभ्यश्च नित्यशः ।)
सर्वस्त्वं सर्वगो देवः सर्वभूतपतिर्भवः ।
सर्वभूतान्तरात्मा च तेन त्वं न निमन्त्रितः ।। ९७

त्वमेव चेज्यसे देव यज्ञैर्विविधदक्षिणैः ।
त्वमेव कर्ता सर्वस्य तेन त्वं न निमन्त्रितः ।। ९८

अथवा मायया देव मोहितः सूक्ष्मया तव ।
तस्मात्तु कारणाद्वाऽपि त्वं मया न निमन्त्रितः ।। ९९

प्रसीद मम देवेश त्वमेव शरणं मम ।
त्वं गतिस्त्वं प्रतिष्ठा च नान्योऽस्तीति मतिर्मम ।। १००

।। ब्रह्मोवाच ।।

स्तुत्वैवं स महादेवं विरराम महामतिः ।
भगवानपि सुप्रीतः पुनर्दक्षमभाषत ।। १०१

श्रीभगवानुवाच—
परितुष्टोऽस्मि ते दक्ष स्तवेनानेन सुव्रत।
बहुनाऽत्र किमुक्तेन मत्समीपं गमिष्यसि॥ १०२

भूयश्च त्वं वरमिमं मत्तो गृह्णीष्व सुव्रत।
प्रसन्नसुमुखो भूत्वा ममैकाग्रमनाः शृणु॥ १०३

दक्षप्रोक्तं स्तवं चापि कीर्तयेद्यः शृणोति वा।
नाशुभं प्राप्नुयात्किञ्चिद्दीर्घमायुरवाप्नुयात्॥ १०४

यथा सर्वेषु देवेषु वरिष्ठो भगवान्भवः।
तथा स्तवो वरिष्ठोऽयं स्तवानां दक्षनिर्मितः॥ १०५

यशःस्वर्गसुरैश्वर्यवित्तादिजयकाङ्क्षिभिः।
स्तोतव्यो भक्तिमास्थाय विद्याकामैश्च यत्नतः॥ १०६

व्याधितो दुःखितो दीनो नरो ग्रस्तो भयादिभिः।
राजकार्यनियुक्तो वा मुच्यते महतो भयात्॥ १०७

मनसा चिन्तितं यच्च यच्च वाचाऽप्युदीरितम्।
तत्तत्संपद्यते तस्य स्तवस्यास्यानुकीर्तनात्॥ १०८

देवस्य सगुहस्याथ देव्या नन्दीश्वरस्य च।
बलिं विभवतः कृत्वा दमेन नियमेन च॥ १०९

ततः प्रयुक्तो गृह्णीयान्नामान्याशु यथाक्रमम्।
ईप्सितांल्लभतेऽप्यर्थान्कामान्भोगांश्च मानवः॥

(श्रीब्रह्मपुराणे वायुपुराणे च)

—*—

# स्वर्णाकर्षणभैरवसहस्रनामावलिः

(शिवेन शिवायै उपदिष्टा)

शिव उवाच—

नाम्नां सहस्रं देवस्य स्वर्णदस्य मया कृतम्।
वक्ष्यामि तत्त्वतः सम्यक् सारात्सारतरं शुभम्॥ १

सर्वपापहरं पुण्यं सर्वोपद्रवनाशनम्।
स्वर्णप्राप्तिप्रदं चैव साधकानां शुभावहम्॥ २

सर्वमङ्गलमाङ्गल्यं सर्वव्याधिनिवारणम्।
आयुष्करं पुष्टिकरं श्रीकरं च यशस्करम्॥ ३

अस्य श्री स्वर्णाकर्षणभैरवस्तोत्रमहामन्त्रस्य, महाभैरव ऋषिः। अनुष्टप् छन्दः। भैरवो देवता।

न्यासः। भैरवाय नमः। (शिरसि) स्वर्णदायकाय नमः। (ललाटे) भूतनाथाय नमः। (नेत्रयोः) स्वर्णदाय नमः (कपोलयोः) स्वर्णाकर्षणभैरवाय नमः। (नासापुटोष्ठयोः) अनादिभूताय नमः। (आस्ये) शक्तिहस्ताय नमः (गले) दैत्यदलनाय नमः (स्कन्धयोः) अतुलतेजसे नमः (बाह्वोः) कपालिने नमः। (पाण्योः) मुण्डमालिने नमः। (हृदये) शान्ताय नमः। (वक्षःस्थले) कामनाशनाय नमः। (स्तनयोः) भैरवाय नमः। (उदरे) क्षेत्रेशाय नमः। (पार्श्वयोः) क्षेत्रपालाय नमः। (पृष्ठदेशे) क्षेत्रज्ञाय नमः। (नाभौ) वसुरूपाय नमः। (जान्वोः) डमरु हस्ताय नमः। (पूर्वदिशि) दण्डधारिणे नमः। (दक्षिणदिशि) स्वर्णाभाय नमः। (पश्चिमदिशि) घण्टावादिने नमः। (उत्तरदिशि) अग्निवर्णाय नमः। (आग्नेय्यां) दिगम्बराय नमः। (नैरृते)

सर्वभूतेशाय नमः। (वायव्ये) अष्टसिद्धिदाय नमः। (ऐशान्यां) खेचरिणे नमः। (ऊर्ध्वं) रौद्ररूपिणे नमः। (पाताले)

स्वर्णदात्रे नमः - हृदयाय नमः। राज्यदात्रे नमः - शिरसे स्वाहा। आनन्दनाथाय नाथाय नमः - शिखायै वषट्। लक्ष्मीकान्तप्रियाय नमः - कवचाय हुम्। स्वर्णाकर्षण भैरवाय नमः - नेत्रत्रयाय वौषट्। श्रीमदानन्दनाथाय नमः - अस्त्राय फट्। ओं भूर्भुवस्युवरों इति दिग्बन्धः। ध्यानम्—

पारिजातद्रुमतटे संस्थिते मणिमण्डले।
सिंहासनगतं वन्दे भैरवं स्वर्णदायकम्॥

गाङ्गेयपात्रं डमरुं त्रिशूलं पाशं करैः सन्दधतं त्रिणेत्रम्।
देव्या युतं श्वानवराश्रितं तं स्वर्णाभिधं भैरवमाश्रयेऽहम्॥
ध्यायामि तं महाराजं स्वर्णाभं नागकुण्डलम्॥
श्रीभैरवीसमायुक्तं रत्नसिंहासनस्थितम्।

(२) ओं ह्रीं बीजं, क्लीं शक्तिः, सं कीलकम्। कामानां सिद्ध्यर्थे जपे विनियोगः।

ओं नमस्ते भैरवेशाय ब्रह्मविष्णुशिवात्मने।
नमस्त्रैलोक्यवन्द्याय वरदाय परात्मने॥

रत्नसिंहासनस्थाय दिव्याभरणधारिणे।
दिव्यमालादिभूषाय नमस्ते दिव्यमूर्तये॥

नमस्तेऽनेकहस्ताय ह्यनेत्रशिरसे नमः।
नमस्तेऽनेकभ्रान्त्रे कवीश्वराय ते नमः॥

नमस्ते नीलकण्ठायानेकांशायाथ ते नमः।
नमस्तेऽनेकपार्श्वाय ह्यनेकादित्यजेतसे॥

मन्दारद्रुममूलभाजि महिते माणिक्यसिंहासने
दिव्ये रत्नमये सुचंपकरुचा देव्या समालिङ्गितः।
भक्तेभ्यो वररत्नपात्रभरितं स्वर्णं ददानो हि सः
स्वर्णाकर्षणभैरवो विजयते स्वर्गापवर्गैकभूः ॥

ओं भैरवाय नमः। भूतनाथाय। भूतात्मने। भूतभावनाय। भूतवासाय। भूतदूताय। भूरिशाय। भूरिदक्षिणाय। भूताध्यक्षाय। भूतपतये। भूधराय। भूधरात्मजाय। भूपतये। भास्कराय। भीरवे। भीमाय। भूमये। विभूतिदाय। भूताय। भूकम्पनाय नमः। २०

ओं भूमिनाम्ने नमः। भूताभिभावकाय। भगनेत्राय। भवाय। भोक्त्रे। भूदेवाय। भगवते। रथिने। भ्राजिष्णवे। भोजनाय। भोक्त्रे। भिक्षाभुजे। भोजनप्रियाय। भूतिमयाय। भृङ्गिरिटिने। भक्तसाधितविग्रहाय। भूतचारिणे। निशाचारिणे। प्रेतचारिणे। भयानकाय नमः। ४०

ओं भवात्मने नमः। भूर्भुवोलक्ष्म्यै। भूतिमते। भवविक्रमाय। पद्मगर्भाय। महागर्भाय। विश्वगर्भाय। भुवे। अभुवे। भूतत्वाय। भुवनाधीशाय। भूतिकृते। भ्रान्तिनाशनाय। भूतिभूषितसर्वाङ्गाय। भूशयाय। भूतवाहनाय। क्षेत्रज्ञाय। भुवनाधीशाय। भूतिदाय। भूतिमते नमः। ६०

ओं प्रभवे नमः। क्षेत्रज्ञाय। क्षेत्रपालाय। क्षेत्रविघ्ननिवारणाय। क्षान्ताय। क्षुद्राय। क्षेत्रपाय। क्षुद्रघ्नाय। क्षत्रपाय। क्षमिणे। क्षोभणाय। मारणाय। स्तम्भनाय। मोहनाय। नमनाय। वशिने। क्षपणाय। क्षान्तिदाय। क्षामाय। क्षमिणे नमः। ८०

ओं क्षेत्रधराय नमः। क्षराय। कङ्कालाय। कालशमनाय। कलाकाष्ठायै। कलानिधये। कालाय। करालाय। कङ्कालिने।

कमनीयाय। कलानिधये। कालाय। कालाकृतये। वायवे। कपर्दिने। कामशासनाय। कुबेरबन्धवे। कामात्मने। कर्णिकारप्रियाय। कपये नमः। १००

ओं कामदेवाय नमः। कामपालाय। कामिने। कान्ताय। कृतागमाय। कल्याणप्रकृतये। कल्पाय। कल्पादये। कमलेक्षणाय। कमण्डलुधराय। केतवे। कालयोगिने। अकल्मषाय। करणाय। कारणाय। कर्त्रे। कैलासपतये। ईश्वराय। कामभुवे। कामदाय नमः। १२०

ओं अचिन्त्याय नमः। किरीटिने। कौशिकाय। कपिलाय। कुशलाय। कर्त्रे। कुमाराय। कपटाय। क्षमाय। कलाद्यद्दशे। कलाधाराय। कपालकण्ठाय। कपालभृते। कैलासशिखरावासाय। कुबेराय। कीर्तिभूषणाय। कालज्ञानिने। कलावासाय। कोपिताय। कान्तविग्रहाय नमः। १४०

ओं कवचिने नमः। कण्टकिने। कार्यकोविदविक्रमाय। कालभक्षाय। कलं कारिणे। किङ्किणीकृतवासुकये। गणेश्वराय। गौरीशाय। गिरीशाय। गिरिबाधकाय। गिरिधन्वने। गुहाय। गोप्त्रे। गुणराशाये। गुणाकराय। गम्भीराय। गहनाय। गोप्त्रे गायत्री-वल्लभाय। गतये नमः। १६०

ओं ग्रीष्माय नमः। गृहपतये। गुप्ताय। गेयाय। गव्यपतये। अगाय। गणवाहाय। गुणग्राहिणे। गणनाय। गुणराशिमते। अग्रगामिने। ईश्वराय। अरोगिणे। खड्गाङ्गिने। गगनालयाय। अमोघाय। अमोघ फलदाय। घण्टाराय। घटकप्रियाय। चन्द्रापीडाय नमः। १८०

ओं चन्द्रमौलये नमः। चित्रवेषाय। चिरन्तनाय। चित्तेशयाय। चित्रबाह्वे। अचलाय। छिन्नसंशयाय। चतुर्वेदाय। चतुर्बाह्वे। चतुराय। चतुरप्रियाय। चामुण्डाजनकाय। चण्डाय। चलाय। क्षणसंचलाय। अचिन्त्यमहिम्ने। अचिन्त्याय। चराचरचरित्रगाय। चन्द्रसंजीवनाय। चित्राय नमः। २००

उमाचार्याय नमः। चतुर्मुखाय। ओजस्तेजोद्युतिधराय। जितकामाय। जनप्रियाय। अजातशात्रवे। ओजस्विने। जितकालाय। जगद्धिताय। जमदग्नये। जलनिधये। जटिलाय। जीवितेश्वराय। जननाय। जनजन्मादये। अर्जुनाय। जन्मविज्ञप्याय। जन्माधिपाय। जटिने। जन्मजरामृत्युभयापहाय नमः। २२०

ओं जीवितान्तकराय नमः। ज्येष्ठाय नमः। जगन्नाथाय। जनेश्वराय। त्रिवर्गसाधनाय। ताक्ष्याय। तद्गुणाय। तन्तुवर्धनाय। तपस्विने। तारकाय। ताराय। तीव्राय। स्वात्मनिसंस्थिताय। तपनाय। तापनाय। तुष्टाय। श्वानयोनये। अतन्द्रिताय। उत्तमाङ्गाय। तिमिरघ्ने नमः। २४०

ओं व्रतिने नमः। वेदाय। तनूनपाते। अन्तर्हिताय। तमिस्राय। तेजसे। तेजोमयाय। स्तन्ये। तरुणाय। अर्धकराय। तिग्माय। तत्वाय। तत्वगृहेचराय। तेजोराशये। शत्रुबाणाय। अतिथये। अतिथिप्रियाय। आत्मयोगशयाय। व्यानाय। तीर्थदेवमयाय नमः। २६०

ओ शिवाय नमः। स्थानदाय। तपनाय। स्थाणवे। स्थविष्ठाय। स्थविराय। त्रिलोकेशाय। त्रिलोकात्मने। त्रिशूलिने। त्रिदिशाधिपाय। त्रिलोचनाय। त्रयीवेद्याय। त्रिर्वर्चः स्थाय। त्रिवर्गदाय। दूराय। वादस्थानघ्नाय। दुर्दशाय। दुस्सहोदयाय। पराय। देवाय नमः। २८०

ओं देवदेवाय नमः । दुन्दुभये । दुन्दुभिप्रियाय । दृढायुधधारिणे । धनदाय । दक्षाय । दुःस्वप्ननाशनाय । दुर्नेयाय । दुर्गमाय । दुर्गाय । दुरावासाय । दुरासदाय । दमाय । दमयित्रे । दान्ताय । दात्रे । दानाय । दयाकराय । दुर्वाससे । द्विजाय नमः । ३००

ओं देवकायाय नमः । दुर्विक्ताय । दुर्भगोदयाय । देहिने । दाह्याय । दानवारये । देवेन्द्राय । अरिमर्दनाय । देवासुरगुरवे । देवाय । देवासुरनमस्कृताय । देवासुरेश्वराय । दिव्याय । देवासुर महेश्वराय । सर्वदेवमयाय । दण्डाय । नक्षत्राय । अक्षराय । नक्षत्रमालिकाकेशाय । नागहाराय नमः । ३२०

ओं पिनाकधृते नमः । व्ययनिर्वहणाय । न्यायिने । नभसे । न्यायाय । निरञ्जनाय । नीरावणाय । अतिविज्ञानाय । नरसिंहनिपातनाय । नन्दिने । नन्दीश्वराय । नग्नाय । नग्नव्रतधराय । नराय । निर्ममाय । निरहङ्काराय । निर्मोहाय । निरुपद्रवाय । निष्कण्टकाय । कृतानन्दाय नमः । ३४०

ओं निर्ध्यातव्याय नमः । जनार्दनाय । अनघाय । निष्कलाय । निष्ठाय । नीलकायाय । निरामयाय । अनिरुद्धाय । अनाद्यन्ताय । नैकात्मने । नैककर्मकृते । नगरेतसे । नखिने । नन्दिने । आनन्दवनवर्धनाय । योगाय । विरागिणे । वैरागिणे । त्यागिने । गौरीवराङ्गनाय नमः । ३६०

ओं कम्बुकण्ठाय नमः । गृहस्थाय । उग्राय । चण्डाय । अखण्डभृते । अन्तकाय । ताण्डवाडम्बररुचये । रुरुमण्डलमण्डिताय । परमेश्वराय । पशुपतये । पिनाकिने । पुरशासनाय । पुरात्सूताय । देवकीराय । परमेष्ठिने । परायणाय ।

पञ्चविंशतितत्त्वस्थाय। पञ्चजन्तवे। प्रभञ्जनाय। मस्करिणे नमः। ३८०

ओं परब्रह्मणे नमः। पारिजाताय। परात्पराय। प्रतिष्ठिताय। प्रमाणज्ञाय। प्रमाणाय। परमार्थदाय। पञ्चब्रह्मणे। सत्पतये। परमात्मने। परायणाय। पिनाकपाणये। प्रांशवे। प्रत्ययाय। परवीरघ्ने। प्रभाकराय। प्रत्यक्षाय। प्रणवाय। पुरञ्जयाय। पवित्रपाणये नमः। ४००

ओं पापारये नमः। प्रत्ययार्चिषे। अपां निधये। पुलस्त्याय। पुलहाय। अगस्त्याय। पुरुहूताय। पुरुष्टुताय। पद्माकराय। परस्मैज्योतिषे। परापरफलप्रदाय। परावरज्ञाय। परदाय। परशत्रवे। परस्मैपदाय। पूर्णाय। पूरयित्रे। पुण्याय। पुण्यश्रवणकीर्तनाय। पुरन्दराय नमः। ४२०

ओं पुण्यकीर्तये नमः। प्रमादिने। पापनाशनाय। परशीलाय। परगुणाय। प्रादुरागाय। पुरन्दराय। परार्थव्यक्तये। प्रभवाय। पुरुषाय। पुरुजाय। पित्रे। पिङ्गलाय। पावनाय। प्लक्षाय। अतलाय। पूषदन्तघ्ने। परमार्थगुरवे। प्रीतये। प्रीतमते नमः। ४४०

ओं पुरातनाय नमः। पराशराय। पद्मगर्भाय। पराय। परपुरञ्जयाय। उपप्लवाय। उभयकराय। परमार्थैकपण्डिताय। महेश्वराय। महादेवाय। मुद्गलाय। मधुराय। मृदवे। मत्ताशयाय। महायोगिने। महाकर्मणे। महौषधाय। महर्षये। कपिलाचार्याय। मृगधाम्ने नमः। ४६०

ओं महालयाय नमः। महानिधये। महाभूतये। महानीतये। महामतये। महाग्रहाय। महागन्त्रे महाभूताय। अमृताय। यमाय। अमृतांशवे। अमृतवपुषे। मरीचये। मोहजालघ्ने। महातपसे।

महाकायाय। मृगबाणार्पणाय। खलाय। महाबलाय। महीपाताय नमः। ४८०

ओं महायोगिने नमः। महामनसे। महामायाय। महा शान्ताय। मतये। नादाय। महोत्सवाय। मात्सर्यविदे। महावीर्याय। महाशक्तये। महाद्युतये। उन्मत्तकीर्तिकृते। मत्ताय। मघवते। अमिताय। मतये। महाभोगाय। अमृताय। मन्त्राय। मङ्गलाय नमः। ५००

ओं मङ्गलप्रियाय नमः। अमोघदण्डाय। मध्यस्थाय। महेशाय। अमोघविक्रमाय। अमेयाय। अरिष्टमथनाय। मुकुन्दाय। सर्वपापघ्ने। मातामहाय। मातरिश्वने। मणिपूराय। महाशयाय। मदघ्ने। महागर्भाय। महाकल्पाय। महाधनुषे। मनसे। मनोमयाय। मानिने नमः। ५२०

ओं मेरुपद्माय नमः। मृडाय। मनवे। महाशोभाय। महाज्ञानिने। महाकालाय। कलिप्रियाय। महावटवे। महात्यागिने। महाकोशाय। महागतये। शिखण्डिने। कवचिने। शूलिने। जटिने। मुण्डिने। कुण्डलिने। मेघमालिने। चक्रखड्गिने। मालिने नमः। ५४०

ओं मायाय नमः। महामणये। महेष्वासाय। महानन्दाय। महाचाराय। महाभुजाय। मखकर्त्रे। मखध्वंसिने। मधुराय। मघवत्प्रियाय। ब्रह्मसृष्टये। ब्रह्मवीर्याय। बाणहस्ताय। अचलाय। बलिने। कीररूपाय। चलाय। उन्मादिने। ब्रह्मण्याय। ब्रह्मवर्चसाय नमः। ५६०

बहुरूपाय। बहुमयाय। ब्रह्मविष्णुशिवात्मकाय। ब्रह्मगर्भाय। अक्षराय। दम्भाय। ब्रह्मज्योतिषे। बृहस्पतये। बीजबुद्धये।

ब्रह्मचारिणे। ब्राह्मणाय। ब्राह्मणप्रियाय। युगादिकृते। युगावर्ताय। युगाध्यक्षाय। युगापघ्ने। यज्ञाय। यज्ञपतये। यज्वने। यज्ञाङ्गाय नमः। ५८०

ओं यज्ञवाहनाय नमः। योगाचार्याय। योगिगम्याय। योगिने। योग्याय। योगविदे। योगाङ्गाय। योगहाराङ्गाय। यक्षाय। युक्तिमयाय। यमाय। रौद्राय। रौद्रर्षये। राहवे। रतिरत्नाय। रणप्रियाय। लोकबन्धवे। लोकनाथाय। लक्षयज्ञाय। लक्षणाय नमः। ६००

ओं लोलमायाय नमः। लोककर्त्रे। लोक्याय। लोलाय। लालिताय। शरभाय। वरदाय। वन्द्याय। विदुषे। विश्वस्मै। महेश्वराय। वेदान्तसारसन्दोहाय। वितताङ्गाय। विशारदाय। विश्वमूर्तये। वेदवेद्याय। वामदेवाय। विमोचकाय। विश्वरूपाय। विरूपाक्षाय नमः। ६२०

ओं वाणीशाय नमः। हव्यवाहनाय। वृषाङ्गाय। विशालाक्षाय। विश्वदर्शिने। विलोचनाय। विशाखाय। विश्वसृजे। विश्वाय। विजितात्मने। अव्ययाय। पुंसे। व्याघ्रचर्मधृतये। व्यापिने। वाङ्मयैकनिधये। विभवे। वर्णाश्रमगुरवे। वर्णाय। वरदाय। वायुवाहनाय नमः। ६४०

ओं विश्वकर्मणे नमः। विनीतात्मने। वेदशास्त्रार्थतत्वविदे। वसवे। वसुमनसे। पालाय। विरामाय। विद्रुमच्छवये। विमोचकाय। विजयाय। विशिष्टाय। वृषवाहनाय। विश्वेशाय। विविधाय। वादिने। वेदाङ्गाय। वेदविदे। मयाय। विश्वेश्वराय। वीरभद्राय नमः। ६६०

ओं वीरासीनाय नमः। विधये। विराजे। व्यवसायाय। व्यवस्थानाय। वीरचूडामणये। विराजे। वालखिल्याय। विश्वदेहाय।

विरामाय। वसुदाय। वसवे। विषेचनाय। वेदवेद्याय। वेदाय। वाचस्पतये। वशिने। विद्वत्तमाय। वित्तमयाय। विश्रुतये नमः। ६८०

ओं विमलोदयाय नमः। वैवस्वताय। वसिष्ठाय। विभूतये। विगतज्वराय। विश्वहर्त्रे। विश्वमोदिने। विश्वामित्राय। द्विजेश्वराय। वीरोत्पत्तये। विश्वसहाय। विश्वावासाय। वसुश्रवसे। वज्रहस्ताय। वज्ररूपाय। विपाकाय। विश्वकारकाय। बृहदश्वाय। व्यालकल्पाय। विशल्याय नमः। ७००

ओं लोकशल्यकृते नमः। विरूपाय। विकृताय। वेगिने। विरिञ्चये। विष्टरश्रवसे। अव्यक्तलक्षणाय। अव्यक्ताय। व्यक्ताय। वैश्याय। विशाम्पतये। विबुधाग्रेसराय। वेदाय। विश्वगर्भाय। विचक्षणाय। विषमाक्षाय। विलोमाक्षाय। वृषदाय। वृषवर्द्धनाय। विविक्तदाय नमः। ७२०

ओं वसन्ताय नमः। विवस्वते। वितमसे। तमसे। वेदवेद्याय। विश्वरूपाय। विविक्ताय। विश्वभाजनाय। विषयस्थाय। विविक्तस्थाय। विद्याराशये। पतिप्रियाय। शिवाय। शर्वाय। सदाचाराय। शम्भवे। ईशानाय। ईश्वराय। श्रुतिधर्मोक्तसंवादिने। सहस्राक्षाय नमः। ७४०

ओं सहस्रपादे नमः। सर्वज्ञाय। सर्वदेवाय। शङ्कराय। शूलधारकाय। शुचये। राशये। स्कन्दगुरवे। श्रीकण्ठाय। सूर्यतापनाय। ईशाननिलयाय। स्वस्ति। सामवेदस्वरूपविदे। मानिने। सुनीतये। शुद्धात्मने। सोमाय। सोमेतराय। सुखिने। सदाशिवाय नमः। ७६०

ओं समावृत्ताय नमः। सुकीर्तये। छिन्नसंशयाय। सर्वकामिने। सदावासाय। सर्वायुधविशारदाय। सुलभाय। सूदनाय। शुद्धाय।

शुभांशवे। शुद्धविग्रहाय। सुवर्णाय। स्वाश्रयाय। शत्रवे। शत्रुजिते। शत्रुतापनाय। शनये। सूर्याय। सर्वकर्मणे। सर्वलोकप्रजापतये नमः। ७८०

ओं सिद्धाय नमः। सर्वेश्वराय। स्वस्तये। स्वस्तिकृते। स्वस्तिभुजे। स्वधायै। वसवे। वसुमनसे। सत्याय। सर्वपापहराय। हराय। सर्वादये। सिद्धिदाय। सिद्धये। सर्वावासाय। चतुष्पथाय। संवत्सरकराय। श्रीमते। शान्ताय। संवत्सराय नमः। ८००

ओं शिशवे नमः। स्पष्टाक्षराय। सर्वहारिणे। संग्रामाय। संगमाय। प्लवाय। इष्टाय। विशिष्टाय। शिष्टेष्टाय। सुलभाय। सुलभायनाय। सुब्रह्मण्याय। सुरगणाय। सुशरण्याय। सुधापतये। शरण्याय। शाश्वताय। स्कन्दाय। शिपिविष्टाय। शिवाश्रयाय नमः ८२०

ओं संसारचक्रभृते नमः। साराय। शङ्कराय। सर्वसाधकाय अम्नाय। शम्नाय। सप्तगणाय। सवित्रे। सकलागमाय। सुचीराय। सप्तदोर्वीराय। षड्विंशाय। सर्वधृषे। स्वराजे। संराजे। सुषेणाय। शत्रुघ्नाय। शूरशत्रवे। शुभोदयाय। समर्थाय नमः। ८४०

ओं सुगमाय नमः। शुक्राय। सद्योगिने। सदसन्मयाय। शाम्ननेत्राय। सुखश्मश्रवे। स्वाधिष्ठानषडाश्रयाय। प्रांशवे। सप्तपतये। वृद्धाय। शमनाय। शिखिसारथये। सुप्रतीकाय। सुवृद्धात्मने। संसृष्टाय। सुखवाङ्निधये। सुखानिलाय। सुसंपन्नाय। सुरभये। शिशिरात्मकाय नमः। ८६०

ओं सर्वदेवमयाय नमः। शैलाय। सर्वशास्त्रप्रभञ्जनाय। शिवालयाय। सूर्यरूपाय। सहस्रमुखनाशकाय। सहस्रबाहवे। सर्वेशाय। सारमाय। सर्वलोकधृते। दूत्यंशाय। सुरसेव्यांशाय।

सर्वदेवोत्तमोत्तमाय। शिवध्यानरताय। श्रीमते। शिखिने। श्रीचण्डिकाधिपाय। श्मशाननिलयाय। सेतवे। सर्वदेवाय नमः। ८८०

ओं महेश्वराय नमः। सुविष्टपिने। सुराराध्याय। सुकुमाराय। सुलोचनाय। सकलाय। सुमताय। स्वर्णाय। स्वर्मिणे। स्वरमथनाय। स्वनाय। सामगाय। सकलाधाराय। सामगानप्रियाय। शुचये। तस्मै। ईतये। सत्कृताय। शान्ताय। सुभूमये नमः। ९००

ओं सत्परायणाय नमः। श्रीवल्लभाय। शिवारम्भाय। शान्तभद्राय। समञ्जसाय। सत्यवाचे। सात्विकाय। सत्याय। सर्वजिते। श्रुतिसागराय। सहस्रार्चिषे। सदाजिष्णवे। सप्तये। सप्तजनेश्वराय। संहारकारणाय। शुद्धाय। शत्रुघ्नाय। स्वर्णदायकाय। सुरेशाय। शरणाय नमः। ९२०

ओं शर्मणे नमः। सर्वस्मै। वेदाय। सताङ्गतये। संवृताय। असंवृताय। शिल्पिने। सिद्धिदाय। स्वर्णसिद्धिदाय। शान्तबुद्धये। शुद्धबुद्धये। स्तव्याय। स्तोत्रे। स्तवप्रियाय। रसज्ञाय। स्वर्णरूपाय। शुद्धये। राज्ञे। वषट् नमः। नमो नमः। ९४०

ओं स्थूलाय नमः। सूक्ष्माय। सहस्रार्कप्रकाशाय। सर्वतोमुखाय। सारमेयानुगाय। शम्भवे। प्रेतवाहाय। सहस्रकृते। ग्रहात्मकाय। रुद्ररूपाय। वस्वष्टस्वर्णकृते। वशिने। आदित्याय। सर्वकर्त्रे। सर्वगाय। स्वर्णसिद्धिदाय। सदारुष्टाय। स्वर्णदात्रे। घुर्घुराय। रक्तलोचनाय नमः। ९६०

ओं पादुकासिद्धिदाय नमः। पाताय। पारुष्यविनिषूदनाय। अष्टसिद्धिये। महासिद्धये। सुप्रसिद्धये। स्वर्णदाय। भूतवेतालघातिने। वेतालानुचराय। रवये। कालाय।

कालाग्निरुद्रश्रिये। स्वर्णाकर्षणभैरवाय। कालमालाय। कलामालाय। त्र्यम्बकाय। त्रिपुरान्तकाय। सर्वाभिचारहन्त्रे। परकृत्यनिषूदनाय। मन्त्रमालिने नमः। ९८०

ओं सर्पमालिने नमः। स्वर्णाकर्षण भैरवाय। श्रीधराय। श्रीकराय। श्रीलाय। श्रीनिवासाय। सदाशिवाय। श्रीस्वरूपाकृतये। श्रीमते। श्रीहराय। श्रीमुखाय। शिवाय। श्रीशान्ताय। श्रीवराहाय। श्रीनिवासाय। श्रियांवराय। स्वर्णदाय। सिद्धिदाय। सिद्धाय। भक्तानां स्वर्णदायकाय नमः।

उत्तर पीठिका

मया ते कथितं देवि रहस्यं स्वर्ण दायकम्।
भैरवस्य वरारोहे वरं नामसहस्रकम्॥

पठेच्च पाठयेद्यस्तु शृणुयात्सुसमाहितः।
स्तोत्र मेतत् पठेद्विद्वान् सर्वदुःखौघ नाशनम्॥

सर्वाण्येतस्य पादाग्रे लुठन्ति धरणीतले।
एककालं द्विकालं वा त्रिकालमथवा निशि॥

पठेद्यः प्रयताहारः सर्वसिद्धिं स विन्दति।
पूर्तकामो भूतिकामः षण्मासं च जपेत् सुधीः॥

अथ शत्रुविनाशार्थं जपेत् त्रिरात्रमुत्तमम्।
मास त्रयेण सर्वेषां रिपूणामन्तको भवेत्॥

मासत्रयं जपेत् देवि भृशं निश्चल मानसः।
धनं पुत्रांश्च दारांश्च प्राप्नुयान्नात्र संशयः॥

यं यं कामयते कामं तं तं प्राप्नोति निश्चितम्।
सर्वकामप्रदो देवि भैरवः सर्वसिद्धदः।

सत्कुलीनाय शान्ताय मृदवे सत्य वादिने।
स्तोत्रदानात्संप्रहृष्टो भैरवोऽभून्महेश्वरः ॥

(श्री चिदम्बर रहस्ये आकाश भैरव कल्पे श्रीरुद्रयामले च)

—*—

पद्मपुराणतः

## श्रीवीरभद्रसहस्रनामावलिः

ओं शम्भवे नमः। शिवाय। महादेवाय। नीलकण्ठाय। वृषध्वजाय। दक्षाध्वर हराय। दक्षाय। क्रूरदानवभञ्जनाय। कपर्दिने। कालविध्वंसिने। कपालिने। करुणार्णवाय। शरणागत रक्षणनिपुणाय। नीललोहिताय। निरीशाय। निर्भयाय। नित्याय। नित्यतृप्ताय। निरामयाय। गम्भीर निनदाय नमः। २०

ओं भीमाय नमः। भयङ्करस्वरूपधृते। पुरन्दरादिगीर्वाण-वन्द्यमानपदाम्बुजाय। संसारवैद्याय। सर्वज्ञाय। सर्वभेषज-भेषजाय। मृत्युञ्जयाय। कृत्तिवाससे। त्र्यम्बकाय। त्रिपुरान्तकाय। बृन्दारबृन्दमन्दाराय। मन्दराचलमण्डनाय। कुन्देन्दु हारनीहार हार गौरसमप्रभाय। राजराजसखाय। श्रीमते। राजीवायतलोचनाय। महानटाय। महाकालाय। महासत्वाय। महेश्वराय नमः। ४०

ओं उत्पत्तिस्थितिसंहारकारणानन्ददर्शकाय। साराय। शूराय। महाधीराय। वारिजासनपूजिताय। वीरसिंहासनारूढाय। वीरमौलिशिखामणये। वीरप्रियाय। वीररसाय। वीरभाषण-तत्पराय। वीरसंग्रामविजयाय। वीराराधनतोषिताय। वीरव्रताय। विराड्रूपाय। विश्वचैतन्यरक्षकाय। वीरभद्राय। भारशराय। मेरुकोदण्डमण्डिताय। वीरोत्तमाङ्गाय। शृङ्गारफलकाय नमः। ६०

ओं विविधायुधाय नमः । नानानवाय । नतारातिमण्डलाय । नागभूषणाय । नारदस्तुतिसन्तुष्टाय । नागलोकपितामहाय । सुदर्शनाय । सुधाकाराय । सुरारातिविमर्दनाय । अनपायाय । परस्मै । सर्वसमाय । सांप्रदायकाय । कामदाय । विषभुजे । योगिने । भोगीन्द्राश्रित कुण्डलाय । उपाध्यायाय । दक्षरिपवे । कैवल्यनिधये नमः । ८०

ओं अच्युताय नमः । सत्वाय । रजसे । तमसे । स्थूलाय । सूक्ष्माय । अन्तर्बहिरव्ययाय । भुवे । अप्स्यवे । ज्वलनाय । वायवे । गगनाय । त्रिजगद्गुरवे। निराधाराय । निरालम्बाय । सर्वाधाराय । सदाशिवाय । भास्वराय । भगवते । फालनेत्राय नमः । १००

ओं भावजसंहराय नमः । व्यालबद्धजटाजूटाय । भालचन्द्रशिखामणये । अक्षयिणे । एकाक्षराय । दुष्टशिक्षकाय । शिष्टरक्षकाय । दक्षपक्षेक्षुबाहुल्यवनलीलागजाय । ऋजवे । यज्ञाङ्गाय । यज्ञभुजे । यज्ञाय । यज्ञेशाय । यजनेश्वराय । महायज्ञधराय । दक्षसम्पूर्णाहुतिकौशलाय । मायामयाय । महाकायाय । मायातीताय । मनोहराय नमः । १२०

ओं मारदर्पहराय नमः । मञ्जवे । महीसुतदिनप्रियाय । सौम्याय । समाय । अनघाय । अनन्ताय । समानरहिताय । हराय । सोमाय । अनेककलाधाम्ने । व्योमकेशाय । निरञ्जनाय । गुरवे । सुरगुरवे । गूढाय । गुहाराधनतोषिताय । गुरुमन्त्राक्षरगुरवे । पराय । परमकारणाय नमः । १४०

ओं कलये नमः । कलाढ्याय । नीतिज्ञाय । करालासुर-सेविताय । कमनीयरविच्छायाय । नन्दनाय । आनन्दवर्धनाय । स्वभक्तपक्षाय । प्रबलाय । स्वभक्तबलवर्धनाय । स्वभक्तप्रति-वादीन्द्रमुखचन्द्रविधुन्तुदाय । शेषाभूषाय । विशेषज्ञाय ।

तोषिताय । सुनसे । सुधिये । दूषकादिजनोद्भूतधूमकेतवे । सनातनाय । दूरीकृताघपटलाय । पूरीकृतसुखव्रजाय नमः । १६०

ओं पूरीकृतेषुकोदण्डाय नमः । निर्वैराय । कृतसङ्कराय । ब्रह्मविदे । ब्राह्मणाय । ब्रह्मणे । ब्रह्मचारिणे । जगत्पतये । ब्रह्मेश्वराय । ब्रह्ममयाय । परब्रह्मात्मकाय । प्रभवे । नादप्रियाय । नादमयाय । नादबिन्दवे । नगेश्वराय । आदिमध्यान्तरहिताय । वेदाय । वेदविदां वराय । इष्टाय नमः । १८०

ओं विशिष्टाय नमः । दुष्टघ्नाय । पुष्टिदाय । पुष्टिवर्धनाय । कष्टदारिद्र्यनिर्णाशाय । दुष्टव्याधिहराय । हराय । पञ्चाननाय । पञ्चकराय । नवपञ्चाननार्चिताय । नीलाम्बुजदलश्यामाय । निर्मलाय । भक्तवत्सलाय । नीलजीमूतसङ्काशाय । कालकन्धरबन्धुराय । जपाकुसुमसन्तुष्टाय । जपहोमार्चनप्रियाय । जगदादये । अनादीशाय । अजगवधरकौतुकाय नमः । २००

पुरन्दरस्तुतानन्दाय नमः । पुलिन्दाय । पुण्यपञ्जराय । पौलस्त्यचलिताय । लोलाय । पर्वतप्रमदाकराय । करणाय । कारणाय । कर्त्रे । करणीयाय । अग्रण्ये । दृढाय । करिदैत्येन्द्रवसनाय । करुणापूरवारिधये । कोलाहलप्रियाय । प्रीताय । शूलिने । पाशकपालभृते । कालकूटगलाय । क्रीडालीलाकृतजगत्त्रयाय नमः । २२०

ओं दिगम्बराय नमः । दिनेशेशाय । धीमते । धीराय । धुरन्धराय । दिक्कालाद्यनवच्छिन्नाय । धूर्जटये । धूतदुर्गतये । कमनीयाय । करालास्याय । कलिकल्मषसूदनाय । करवीरारुणाम्भोजकल्हारकुसुमार्चिताय । खराय । मण्डित-दोर्दण्डाय । खरूपाय । कालभञ्जनाय । खरांशुमण्डल-मुखाय । खण्डितारातिमण्डलाय । गणेशगणिताय । गण्याय नमः । २४०

ओं पुण्यराशये नमः । शुभोदयाय । गणाधिप-कुमारादिगणकैरवबान्धवाय। घनघोषबृहन्नादघनीकृतसुनूपुराय। घनचर्चितसिन्दूराय । घण्टाभीषणभैरवाय । चराचराय । अचलाय। अनन्ताय । चतुराय। चक्रबन्धकाय । चतुर्मुख-मुखाम्भोजचतुरस्तुतितोषणाय। चलवादिने। चलाय। शान्ताय। छान्दसाय । छान्दसप्रियाय । छिन्नच्छलादिदुर्वादच्छिन्न षट्तन्त्रतान्त्रिकाय । जडीकृतमहावज्रजम्भारातये । नतोन्नताय नमः । २६०

ओं जगदाधारभुवे नमः । एकस्मै । जगदन्ताय । निरञ्जनाय। झर्झरध्वनिसंयुक्ताय। झङ्काररवभूषणाय। जटिने। विपक्षवृक्षझञ्झामारुतसन्निभाय । प्रवर्णाश्चित पत्रांकाय । प्रवर्णाद्यक्षरव्रजाय। टवर्णबिन्दुसंयुक्ताय। टङ्कारहृतदिग्गजाय। ठवर्णपूरद्विदशाय । ठवर्णाग्रदशाक्षराय । ठवर्णयुतसद्यन्त्राय । ठजपाक्षरपूरकाय। डमरुध्वान संरक्ताय। डम्बरानन्तताण्डवाय। डं डं डं घोषप्रमदाय। डंबराय। गणताण्डवाय नमः । २८०

ओं ढक्कापटहसुप्रीताय नमः । ढक्कारववशानुगाय । ढक्कादितालसन्तुष्टाय । ढोढिबन्धस्तुतिप्रियाय । तपस्विरूपाय । तपनाय । तप्तकाञ्चनसन्निभाय । तपस्विवदानाम्भोज-कारुण्यतरणिद्युतये। ढगादिपादसौहार्दस्थितये। संयमिनां वराय। स्थाणवे । तण्डुनतिप्रीताय । स्थितिस्थावरजङ्गमाय । दरहासाननाम्भोज दन्तहीरावलिद्युतये । दर्वीकराङ्गदभुजाय । दुर्वाराय। दुःखदुर्ग्रहाय। धनाधिपसखाय। धीराय। धर्माय नमः । ३००

ओं धर्मपरायणाय नमः । धर्मध्वजाय । दानशौण्डाय । धर्मकर्मफलप्रदाय । पशुपाशहराय । शर्वाय । परमात्मने ।

सदाशिवाय। परापराय। परशुधृते। पवित्राय। सर्वपावनाय। फल्गुनस्तुतिसन्तुष्टाय। फल्गुनाग्रजवत्सलाय। फल्गुनोर्जित-संग्रामफलपाशुपतप्रदाय। बलाय। बहुविलासाङ्गाय। बहुलीलाधराय। बह्वे। बहिर्मुखसुराराध्याय नमः। ३२०

ओं बलिबन्धनबान्धवाय नमः। भयङ्कराय। भवपराय। भर्गाय। भयहराय। भवाय। भालनेत्राय। बहुभुजाय। भास्वते। सद्भक्तवत्सलाय। मन्त्राय। मन्त्रगणाय। मन्त्रिणे। मन्त्राराधनतोषिताय। मन्त्रयज्ञाय। मन्त्रवादिने। मन्त्रबीजाय। महन्महसे। यन्त्राय। यन्त्रमयाय नमः। ३४०

ओं यन्त्रिणे नमः। यन्त्रज्ञाय। यन्त्रवत्सलाय। यन्त्रपालाय। यन्त्रहराय। त्रिजगद्यन्त्रवाहकाय। रजताद्रि-सदावासाय। रवीन्दुशिखिलोचनाय। रतिश्रान्ताय। जितश्रान्ताय। रजनीकरशेखराय। ललिताय। लास्यसन्तुष्टाय। लब्धोग्राय। अलघुसाहसाय। लक्ष्मीनिजकराय। लक्ष्यलक्षणाय। लसन्मतये। वरिष्ठाय। वरदाय नमः। ३६०

ओं वन्द्याय नमः। वरदानपराय। वशिने। वैश्वानराश्रितभुजाय। वरेण्याय। विश्वतोमुखाय। शरणार्तिहराय। शान्ताय। शङ्कराय। शशिशेखराय। शरभाय। शम्बरारतिभस्मोद्धूलितविग्रहाय। षट्त्रिंशत्तत्त्वविद्रूपाय। षण्मुखस्तुतितोषणाय। षडक्षराय। शक्तियुताय। षट्पदाद्यर्थ कोविदाय। सर्वज्ञाय। सर्वसर्वेशाय। सर्वदानन्दकारकाय नमः। ३८०

ओं सर्वविदे नमः। सर्वकृते। सर्वस्मै। सर्वदाय। सर्वतोमुखाय। हराय। परमकल्याणाय। हरिचर्मधराय। परस्मै।

हरिणार्धकराय । हंसाय । हरिकोटिसमप्रभाय । देवदेवाय । जगन्नाथाय । देवेशाय । देववल्लभाय । देवमौलिशिखारत्नाय । देवासुरनुताय । नताय । सुरूपाय नमः । ४००

ओं सुव्रताय नमः । शुद्धाय । सुकर्मणे । सुस्थिताय । सुधिये । सुरोत्तमाय । सुफलदाय । सुरचिन्तामणये । शुभाय । कुशलिने । विद्रुमाय । तर्काय । कुण्डलीकृत कुण्डलिने । खण्डेन्दुकोरकजटाजूटाय । कालानलद्युतये । व्याघ्रचर्माम्बरधराय । व्याघ्रोग्रबहुसाहसाय । व्यालोपवीतविलसते । शोणिताम्बर-साम्बकाय । द्युमणये नमः । ४२०

ओं तरणये नमः । वायवे । सलिलाय । व्योम्ने । पावकाय । सुधाकराय । यज्ञपतये । अष्टमूर्तये । कृपानिधये । चिद्रूपाय । चिद्घनाय । आनन्दकन्दाय । चिन्मयनिष्कलाय । निर्द्वन्द्वाय । निष्प्रभाय । नित्याय । निर्गुणाय । निर्गतामयाय । व्योमकेशाय । विरूपाय नमः । ४४०

ओं वामदेवाय नमः । निरञ्जनाय । सामरूपाय । शमधुराय । कामचारिणे । कलाधराय । जाम्बूनदप्रभाय । जाग्रते । जन्मादिरहिताय । ज्वलाय । सर्वजन्तुजनकाय । जन्मदुःखाप-नोदनाय । पिनाकपाणये । अक्रोधाय । पिङ्गलायतलोचनाय । परमात्मने । पशुपतये । पावनाय । प्रमदाधिपाय । प्रणवाय नमः । ४६०

ओं कामदाय नमः । कान्ताय । श्रीप्रदाय । दिव्यलोचनाय । प्रणतार्तिहराय । प्राणाय । परस्मैज्योतिषे । परात्पराय । तुष्टाय । तुहिनशैलाधिवासाय । स्तोत्रवरप्रियाय । इष्टकाम्यार्थफलदाय । सृष्टिकर्त्रे । मरुत्पतये । भृग्वत्रिकण्वजाबालिहृत्पद्माहिमदीधितये ।

क्रतुध्वंसिने। क्रतुमुखाय। क्रतुकोटिफलप्रदाय। क्रतवे। क्रतुमयाय नमः। ४८०

ओं क्रूरदर्पघ्नाय नमः। विक्रमाय। विभवे। दधीचिहृदयानन्दाय। दधीच्यादिसुपालकाय। दधीतिवाञ्छित-सखाय। दधीचिवरदाय। अनघाय। सत्पथक्रमविन्यासाय। जटामण्डलमण्डिताय। साक्षित्रयमयाय। चारुकलाधरकपर्दभृते। मार्कण्डेयमुनिप्रीताय। मृडाय। जितपरेतराजे। महीरथाय। वेदहयाय। कमलासनसारथये। कौण्डिन्यवत्सवात्सल्याय। काश्यपोदयदर्पणाय। कण्वकौशिकदुर्वासोहृद्गुहान्तर्निधये नमः। ५००

ओं निजाय नमः। कपिलाराधनप्रीताय। कर्पूरधवलद्युतये। करुणावरुणाय। कालीनयनोत्सवसङ्कराय। घृणैकनिलयाय। गूढतनवे। मारहरप्रियाय। गणाधिपाय। गुणनिधये। गाम्भीर्याश्चितवाक्पतये। विघ्ननाशाय। विशालाक्षाय। विघ्नराजाय। विशेषविदे। सप्तयज्ञयजाय। सप्तजिह्वजी-व्यतिसंहराय। अस्थिमालाविलशिरसे। निस्तारितजगद्भुजाय। न्यस्ताखिलस्रजे नमः। ५२०

अस्तोकविभवाय नमः। प्रभवे। ईश्वराय। भूतेशाय। भावनाधाराय। भूतिदाय। भूतिभूषणाय। भूतात्मकात्मकाय। भूर्भुवादिक्षेमकराय। शिवाय। अणोरणीयसे। महतो महीयसे। वागगोचराय। अनेकवेदवेदान्त तत्त्वबीजाय। तपोनिधये। महावनविलासाय। अतिपुण्यनाम्ने। सदाशुचये। महिषासुरमर्दिनी नयनोत्सवसङ्कराय। शितिकण्ठाय नमः। ५४०

ओं शिलादादि महर्षिनतिभाजनाय नमः। गिरीशाय। गीष्पतये। गीतवाद्यनृत्तस्तुतिप्रियाय। सुकृत्यङ्गीकृताय।

शृङ्गाररसजन्मभुवे । भृङ्गिताण्डवसन्तुष्टाय । मङ्गलाय । मङ्गलप्रदाय। मुक्तेन्द्रनीलताटङ्काय । मुक्ताहारविभूषिताय । सक्तसज्जनसद्भावाय। भुक्तिमुक्तिफलप्रदाय । सुरूपाय । सुन्दराय । शुक्लधर्माय । सुकृतविग्रहाय । जितामररूपाय । सर्वदेवराजे। असमेक्षणाय नमः । ५६०

ओं दिवस्पतिसहस्राक्षवीक्षणावलितोषकाय नमः । दिव्यनामामृतरसाय । दिवाकरपतिप्रभवे । पावकप्राण सन्मित्राय। प्रख्यातोर्ध्वज्वलन्महसे । प्रकृष्टभानवे । पुरुषाय । पुरोडाशभुजे । ईश्वराय । समवर्तिने । पितृपतये । धर्मराजाय । शमनाय । यमिने । पितृकाननसन्तुष्टाय । भूतनायकनायकाय । नयान्विताय । सुरपतये। नानापुण्यजनाश्रयाय । नैरृत्यादि-महाराक्षसेन्द्रस्तुतियशोम्बुधये नमः । ५८०

ओं प्रचेतसे नमः । जीवनपतये। धृतपाशाय। दिगीश्वराय। धीरोदारगुणाम्भोधिकौस्तुभाय । भुवनेश्वराय । सदासुभोग-संपूर्णसौहार्दाय । सुमनोज्वलाय । सदागतये । साररसाय । सजगत्प्राणिजीवनाय। राजराजाय। किन्नरेशाय। कैलासस्थाय। धनप्रदाय । यक्षेश्वरसखाय । कुक्षिनिक्षिप्तानेकविस्मयाय । सर्वविधानमीशानाय। ईश्वराय। वृषलाञ्छनाय नमः। ६००

ओं इन्द्रादिदेवविलसन्मौलिरम्यपदाम्बुजाय नमः । विश्वकर्माश्रयाय । विश्वतोबाहवे । विश्वतोमुखाय । विश्वतः प्रमदाय। विश्वनेत्राय । विश्वेश्वराय । विभवे । सिद्धान्ताय । सिद्धसंकल्पाय। सिद्धगन्धर्वसेविताय। सिद्धिदाय। शुद्धहृदयाय। सद्योजातानन‍ाय। शिवाय। श्रीमयाय। श्रीकटाक्षाङ्गाय। श्रीनाम्ने। श्रीगणेश्वराय। श्रीदाय नमः। ६२०

ओं श्री वामदेवास्याय नमः । श्रीकण्ठाय । श्रियै । श्रियङ्कराय । घोराघध्वान्तमार्ताण्डाय । घोरेतरफलप्रदाय । घोरघोरमहायन्त्रराजाय । घोरमुखाम्बुजाय । तताय । सुषिरसुप्रीततत्त्वाद्यागमजन्मभुवे । तत्त्वमस्यादिवाक्यार्थाय । तत्पूर्वमुखमण्डिताय । आशापाशविनिर्मुक्ताय । शेषभूषण-भूषिताय । दोषाकरलसन्मौलये । ईशानमुखनिष्कलाय । पञ्चवक्त्राय । दशभुजाय । पञ्चाशद्वर्णनायकाय । पञ्चाक्षरयुताय नमः । ६४०

ओं पञ्चत्रितयलोचनाय नमः । वर्णाश्रमगुरवे । सर्ववर्णाधाराय । प्रियङ्कराय । कर्णिकारार्कधत्तूरपूर्णपूजाफल-प्रदाय । योगीन्द्रहृदयानन्दाय । योगिने । योगविदां वराय । योगध्यानादिसन्तुष्टाय । रागादिरहिताय । रमाय । भवाम्भोधिप्लवाय । बन्धमोचनाय । भद्रदायकाय । भक्तानुरक्ताय । भव्याय । सद्भक्तिदाय । भक्तिभावनाय । अनादिनिधनाय । अभीष्टाय नमः । ६६०

ओं भीमकान्तार्जुनाय नमः । बलाय । अनिरुद्धाय । सत्यवादिने । सदानन्दाश्रयाय । अनघाय । सर्वविद्यालयाय । सर्वकर्माधाराय । सर्वलोकालोकाय । सर्वात्माविर्भावाय । इज्यापूर्तेष्टफलदाय । इच्छाशक्त्यादिसंश्रयाय । इनाय । सर्वामराराध्याय । ईश्वराय । जगदीश्वराय । रुण्डपिङ्गलमध्यस्थाय । रुद्राक्षाश्रितकन्धराय । रुण्डिताधारभक्त्यादये । ईडिताय । सवनाशनाय नमः । ६८०

ओं उरुविक्रमबाहुल्याय नमः । उर्व्याधाराय । धुरन्धराय । उत्तरोत्तरकल्याणाय । उत्तमोत्तमनायकाय । ऊरुजानुतटिद्वृन्दाय । ऊर्ध्वरेतोमनोहराय । ऊहितानेकविभवाय । ऊहिताम्नायमण्डलाय ।

ऋषीश्वरस्तुतिप्रीताय । ऋषिवाक्यप्रतिष्ठिताय । ऋगादिनिगमाधाराय । ऋजुकर्मणे । मनोजवाय । रूपादिविषयाधाराय । रूपातीताय । ऋषीश्वराय । रूपलावण्यसंयुक्ताय । रूपानन्दस्वरूपधृते । लुलितानेकसंग्रामाय नमः । ७००

ओं लुप्यमानरिपुव्रजाय नमः । लुब्धक्रूरान्धकहराय । लूकाराश्रितयन्त्रभृते । लूकाराधिव्याधिहराय । लूस्वराश्रितयन्त्रयुजे । लूशादिगिरिशाय । पक्षाय । खलवाचामगोचराय । एष्यमाणाय । नतजनाय । एकचित्ताय । दृढव्रताय । एकाक्षरमहाबीजाय । एकरुद्राय । अद्वितीयकाय । ऐश्वर्यवर्णनामाङ्गाय । ऐश्वर्यप्रकरोज्वलाय । ऐरावणादिलक्ष्मीशाय । ऐहिकामुष्मिकप्रदाय । ओषधीशशिखारत्नाय नमः । ७२०

ओं ओंकाराक्षरसंयुताय नमः । सकलदेवौकसे । ओजोराशये । अजाद्यजाय । औदार्यजीवनपराय । औचित्यमणिजन्मभुवे । उदासीनाय । एकगिरिजाय । उत्सवाय । उत्सवकारणाय । अङ्गीकृतषडङ्गाङ्गाय । अङ्गहारमहानटाय । अङ्गजाङ्गजभस्माङ्गाय । मङ्गलायतविग्रहाय । कः किं त्वदनुदेवेशाय । कः किं किन्नुपरप्रदाय । कः किन्नुभक्तसन्तापहराय । कारुण्यसागराय । स्तोतुमिच्छतां स्तोतव्याय । शरणार्थिनां मन्तव्याय नमः । ७४०

ओं ध्यानैकनिष्ठानां ध्येयाय नमः । धाम्नः परमपूरकाय । भगनेत्रहराय । पूताय । साधुदूषकभीषणाय । भद्रकालीमनोराज हंसाय । सत्कर्मसारथये । सभ्याय । साधवे । सभारत्नाय । सौन्दर्यगिरिशेखराय । सुकुमाराय । सौख्यकराय । सहिष्णवे । साध्यसाधनाय । निर्मत्सराय । निष्प्रपञ्चाय । निर्लोभाय । निर्गुणाय नमः । ७६०

ओं नयाय नमः । वीताभिमानाय । निर्जाताय । निरातङ्काय । निरञ्जनाय । कालत्रयाय । कलिहराय । नेत्रत्रयविराजिताय । अग्नित्रयनिभाङ्गाय । भस्मीकृतपुरत्रयाय । कृतकार्याय । व्रतधराय । व्रतनाशाय । प्रतापवते । निरस्तदुर्विधये । निर्गताशाय । निर्वाणनीरधये । सर्वहेतूनां निदानाय । निश्चितार्थेश्वरेश्वराय । अद्वैतशाम्भवमहते नमः । ७८०

ओं अनिर्व्याजोर्ध्वलोचनाय नमः । अपूर्वपूर्वाय । परमाय । सपूर्वाय । पूर्वपूर्वदिशे । अतीन्द्रियाय । सत्यनिधये । अखण्डानन्दविग्रहाय । आदिदेवाय । प्रसन्नात्मने । आराधकजनेष्टदाय । सर्वदेवमयाय । सर्वस्मै । जगद्वाससे । सुलक्षणाय । सर्वान्तरात्मने । सद्दशाय । सर्वलोकैकपूजिताय । पुराणपुरुषाय । पुण्याय नमः । ८००

ओं पुण्यश्लोकाय नमः । सुधामयाय । पूर्वापरज्ञाय । पुरजिते । पूर्वदेवाय । अमरार्चिताय । प्रसन्नदर्शितमुखाय । पन्नगावलिभूषिताय । प्रसिद्धाय । प्रणताधाराय । प्रलयोद्भूतकारणाय । ज्योतिर्मयाय । ज्वलद्दंष्ट्राय । ज्योतिर्मालावलीवृताय । जाज्वल्यमानाय । ज्वलन्नेत्राय । जलधरद्युतये । कृपाम्भोराशये । अम्लानाय । वाक्यपुष्टाय नमः । ८२०

ओं अपराजिताय नमः । क्षपाकरार्ककोटिप्रभाकराय । करुणाकराय । एकमूर्तये । त्रिधामूर्तये । दिव्यमूर्तये । अनाकुलाय । अनन्तमूर्तये । अक्षोभ्याय । कृपामूर्तये । सुकीर्तिधृते । अकल्पितामरतरवे । अकामितसुकामदुहे । अचिन्तितमहाचिन्तामणये । देवशिखामणये । अतीन्द्रियाय । अजिताय । प्रांशवे । ब्रह्मविष्ण्वादिवन्दिताय । हंसाय नमः । ८४०

ओं मरीचये नमः । भीमाय । रत्नसानुशरासनाय । संभवाय । अतीन्द्रियाय । वैद्याय । विश्वरूपिणे । निरञ्जनाय । वसुदाय । सुभुजाय । नैकमायाय । भव्याय । प्रमोदनाय । अगदाय । रोगहर्त्रे । शरासनविशारदाय । मायिने । विश्वादनाय । व्यापिने । पिनाककरसंभवाय नमः । ८६०

ओं मनोवेगिने नमः । पूर्णाय । पुरुषपुङ्गवाय । शब्दातिगाय । गभीरात्मने । कोमलाङ्गाय । प्रजागराय । त्रिकालज्ञाय । मुनये । साक्षिणे । पापारये । सेवकप्रियाय । उत्तमाय । सात्विकाय । सत्याय । सत्यसन्धाय । निराकुलाय । रसाय । रसज्ञाय । सारज्ञाय नमः । ८८०

ओं लोकसाराय नमः । रसात्मकाय । पूषदन्तभिदे । अव्यग्राय । दक्षयज्ञनिषूदनाय । देवाग्रण्ये । शिवध्यानतत्पराय । परमाय । शुभाय । जयाय । जयादये । सर्वाधिशमनाय । भवभञ्जनाय । अलङ्करिष्णवे । अचलाय । रोचिष्णवे । विक्रमोत्तमाय । शब्दगाय । प्रणवाय । मायिने नमः । ९००

अंशुमते नमः । अनिलतापहृते। निरीशाय । निर्विकल्पाय । चिद्रूपाय । जितसाध्वसाय । उत्तारणाय । दुष्कृतघ्ने । दुर्धर्षाय । दुःसहाय । अभयाय । नक्षत्रमालिने । नाकेशाय । स्वाधिष्ठानषडाश्रयाय । अकायाय । भक्तकायस्थाय । कालज्ञानिने । महानटाय । अंशवे । शब्दपतये नमः । ९२०

ओं वेगिने । पवनाय । शिखिसारथये । वसन्ताय । माधवाय । ग्रीष्माय । पवनाय । पावनाय । अमलाय । पारवे । विशल्याय । चतुराय । शिवचत्वरसंस्थिताय । आत्मयोगाय ।

समाम्नायाय । तीर्थदेवाय । शिवालयाय । मुण्डाय । विरूपाय । विकृतये नमः । ९४०

ओं दण्डाय नमः । दान्ताय । गुणोत्तमाय । देवासुरगुरवे । देवाय । देवासुरनमस्कृताय । देवासुरमहामन्त्राय । देवासुरमहाश्रयाय । दिव्याय । अचिन्त्याय । देवतात्मने । ईशाय । अनीशाय । नगाग्रगाय । नन्दीश्वराय । नन्दिसखाय । नन्दिस्तुतपराक्रमाय । नग्राय । नगव्रतधराय । प्रलयाकाररूपदृशे नमः । ९६०

ओं नेश्वराय नमः । स्वर्गदाय । स्वर्गाय । स्वराय । सर्वमयाय । स्वनाय । बीजाध्यक्षाय । बीजकर्त्रे । धर्मकृते । धर्मवर्धनाय । दक्षयज्ञमहाद्वेषिणे । विष्णुकन्धरपातनाय । धूर्जटिने । खण्डपरशवे । सकलाय । निष्कलाय । अनघाय । मृडाय । नटाय । पूरयित्रे नमः । ९८०

ओं पुण्याङ्कुराय नमः । मनोजवाय । सद्भूताय । सत्कृताय । शान्ताय । कालकूटाय । महते । अनघाय । अर्थाय । अनर्थाय । महाकायाय । नैककर्मसमञ्जसाय । भूशयाय । भूषणाय । भूतिभूषणाय । भूतवाहनाय । शिखण्डिने । कवचिने । शूलिने । जटिने नमः । १०००

ओं मुण्डिने नमः । कुण्डलिने । मेखलिने । मुसलिने । खड्गिने । कङ्कणीकृतवासुकये । भूलोकपुण्यक्षेत्र निवासिने । भद्रकाली सहित श्रीवीरभद्राय नमः । १००८

—*—

॥ श्रीः ॥

# नन्दिकेश्वर सहस्रनामावलिः

(नकारादिधकारान्ता)

ओं नन्दिने नमः । नन्दीश्वराय । नन्दिकेशाय । नतगणावृताय । नगेन्द्रनिलयाय । नम्राय । नरस्तुत्याय । नरोत्तमाय । नवरत्नप्रभाय । नव्याय । नवपुष्पप्रियाय । नराय । नगस्थाय । नारदनुताय । नामपारायणप्रियाय । नाभिविद्या-जपासक्ताय । न्यासकृते । नागभूषणाय । नारीमोहकराय । नाथाय नमः । २०

ओं नाथपूज्याय नमः । नटप्रियाय । नन्द्यावर्तसुमप्रीताय । नान्द्यन्तनटसूत्रधृते । नन्द्यावर्तसमिद्धोमप्रियाय । नानागणा-वृताय । निश्चलात्मने । निधये । नित्यानित्यवस्तुविबोधकाय । नीहारगिरिसंरूढाय । निरन्तरशिवाश्रयाय । नित्याय । नीतिविधानज्ञाय । नित्यानन्दरसाश्रिताय । निर्गुणाय । निर्गुणासक्ताय । निस्तन्द्राय । निरवग्रहाय । निर्वैराय । नित्यशुद्धात्मने नमः । ४०

ओं निराबाधाय नमः । निरन्तराय । नीलकण्ठाय । नीलवर्णाय । नीलवीरुधपूजिताय । नैदानिकगुरवे । नाद्यनाम्ने । नासाग्र-लोचनाय । नूपुरादिधराय । न्यायशास्त्रज्ञाय । नतसिद्धिदाय । पत्ये । पशुपतये । प्राज्ञाय । पतत्रिवरपूजिताय । पञ्चाङ्गकृते । पञ्चतनवे । पञ्चब्रह्ममयाकृतये । पञ्चाङ्गरुद्रजपकृते । पञ्चपञ्चाक्षराङ्गविदे नमः । ६०

ओं प्रदोषकालसम्पूज्याय नमः । पञ्चबाणसमर्चिताय । पञ्चापगेश्वराय । पञ्चत्रिवर्णाय । पञ्चकोणगाय । पञ्चावरण-

संयुक्ताय । प्राकाराग्रसमर्चिताय । पाषाणादिसमुद्भूताय । पतञ्जलिमुनीडिताय । पार्वतीभक्तिमते । पञ्चपातकघ्नाय । प्रशान्तधिये । पञ्चास्यवाहाय । पञ्चास्यकेतये । पन्नगभूषणाय । पुत्राय । पुण्याय । प्रसन्नात्मने । परमध्यानमास्थिताय । पट्टाभिषिक्ताय नमः । ८०

ओं परमाय नमः । परमैश्वर्यसंयुताय । प्रीत्या शिवेन हस्ताभ्यां गाढाश्लिष्टाय । प्रमोदभृते । पारिजातप्रियाय । पुंसां शिवभक्तिप्रवर्धकाय । प्राञ्जलये । परमेशानभक्ताय । पाशुपताय । प्रभवे । पार्षदाय । पार्षदाधीशाय । पाणिनीड्याय । पवित्रभृते । पर्शुभृते । पाशभृते । पञ्चहीनाय । पर्जन्यवेगघ्ने । पातित्यघ्ने । परानन्दाय नमः । १००

ओं पराप्रसादविदे नमः । परस्मै । परमात्मने । परोत्साहाय । परशक्तिमतप्रभवे । पीनकायाय । पीठसंस्थाय । पीताम्बरधराय । पटवे । पटुवाचे । पक्वभुजे । पथ्याय । पतङ्गकुलदैवताय । फणीन्द्रकुण्डलधराय । फणिराजे । फणिभूषणाय । फुल्लपद्मस्थिताय । फुल्लपद्माभाय । फेनगण्डयुजे । बलाय नमः । १२०

ओं बलारिविनुताय नमः । बलरामसमर्चिताय । बाणमित्राय । बाणपूज्याय । बाणानेकविराजिताय । बालचन्द्रधराय । बालाय । बालग्रहनिषूदनाय । बाधाहीनाय । बुधाय । बुद्धाय । बोधायनसमर्चिताय । ब्रह्मण्याय । ब्राह्मणाय । ब्रह्मतत्वज्ञाय । ब्रह्मविनुताय । ब्रह्मावर्तसमुद्भूताय । बृहत्सामस्तुतेश्वराय । ब्रह्मचक्रधराय । ब्रह्मोपदेष्ट्रे नमः । १४०

ओं ब्राह्मणात्मजाय नमः । बृहस्पतिनुताय । ब्रह्मणे । ब्रह्मनिष्ठाय । बृहस्पतये । बाधाहीनाय । बिन्दुचिह्नाय ।

बिन्दुमण्डलराजिताय। बोद्धे। बोधयित्रे। बोध्याय। बोधरूपिणे। बुधार्चिताय। बाणासनधराय। बाणिने। बाणलिङ्गार्चनप्रियाय। बलीवर्दप्रियाय। बिल्वमोदिताय। बलिनांवराय। बाहुलेयोत्साह-कारिणे नमः। १६०

ओं बलिष्ठाय नमः। बलिगर्वघ्ने। बलिमुदे। बलिपीठाग्र्याय। बिन्दुमते। ब्राह्मणप्रियाय। ब्रह्मविद्यागुरवे। ब्रह्मज्ञानिने। ब्रह्मैक्यनिश्चयाय। भवभक्ताय। भवानन्दिने। भववाह्याय। भवप्रियाय। भवघ्ने। भगवते। भद्राय। भद्ररूपिणे। भगेश्वराय। भद्रेश्वराय। भद्रदायिने नमः। १८०

ओं भयघ्ने नमः। भाग्यवर्धनाय। भासमानाय। भार्गवेशाय। भानुमते। भीमपूजिताय। भीमकायाय। भीमकृत्याय। भीतिहीनाय। भिषग्वराय। भिषक्तज्ज्ञगुरवे। भीष्माय। भीतिघ्ने। भास्कराय। भवाय। भवाब्धिबाडबाय। भाग्यदायिने। भानुसमद्युतये। भानुकोपनुताय। भानुकम्पमित्राय नमः। २००

ओं भटावृताय नमः। भैरवाय। भैरवादिष्टाय। भेरुण्डोत्साहवर्धनाय। भक्तिमते। भक्तवात्सल्याय। भट्टारकगुरवे। भटाय। भिण्टिपालधराय। भोगिने। भोगेशाय भस्मपाण्डराय। भूतिमते। भूतिकृते। भूतनाथाय। भाव्याय। भवार्चकाय। महात्मने। मतिमते। मानिने नमः। २२०

ओं महादेवपरायणाय नमः। महान्यासजपासक्ताय। मनोन्मनसमाधिमते। माननीयाय। महामारिहराय। मन्त्रिणे। मदापहाय। महेशभक्ताय। माहेशाय। महते। मारनिदेशकाय। माहेश्वरार्चकाय। मौनिने। मौनमुद्रार्थविदे। मुनये। मुनिसूनवे।

मुनीन्द्राच्र्याय । मुकुन्दादिहितप्रदाय । मारजिते । मारजित् तन्त्र गुरवे नमः । २४०

ओं माषौदनप्रियाय नमः । मायाविने । मङ्गलाधाराय । मोक्षमार्गोपदेशकृते । मोहकृते । मोहिनीसेव्याय । मणिमते । मणिभूषणाय । मणिवाचे । मणिवाग्रूपाय । मन्त्राचार्याय । मरालगाय । मकराय । मकराकाराय । महाशास्त्रे । महोदयाय । मित्रावरुणसंदृष्टाय । महाप्राज्ञाय । महामुनये । महाशक्तये नमः । २६०

ओं महेष्वासाय नमः । महायोगिने । महाबलाय । मुनिप्रदाय । मृत्युहीनाय । मुकुटादिविभूषणाय । महासमाधि-संलीनाय । महादेवांशसम्भवाय । मत्समस्त्वमितीशोक्ताय । मङ्गलायतनस्थिताय । मरुत्सुतोद्वाहकाल महोत्सवमनोहराय । मृत्युलाङ्गूलमन्त्रेड्याय । मृल्लिङ्गार्चनतत्पराय । यज्वने । यज्वोद्भवाय । यज्ञशीलाय । यजनसम्भवाय । यज्ञाङ्गणोद्भवाय । यज्ञवाटाकर्षणसम्भवाय । युगान्ताग्निसमप्रख्याय नमः । २८०

ओं योगारूढबलाश्रिताय नमः । यमिने । यमादिमा-चार्याय । यमदूतसमर्चिताय । यमार्चिताय । यतीन्द्राच्र्याय । यष्टिमते । यष्टितन्त्रवदे । याथार्थ्यविदे । यमीन्द्राच्र्याय । यशस्विने । यमुनाप्रियाय । यन्त्रज्ञाय । यन्त्रितगणाय । यताक्षाय । यातनापहाय । यामिनीचरसम्पूज्याय । योगिने । योगगुरवे । यतये नमः । ३००

ओं योगौषधिनिदानज्ञाय नमः । योगपट्टविराजिताय । यूने । युवाकृतये । युद्धकृते । योद्ध्रे । योधवन्दिताय । रहस्यज्ञाय । रसानन्दिने । रमणीशाय । रमार्चिताय । रामाय । रामार्चिताय ।

रामदूतरूपाय । रसादिविदे । रावणान्तकराय । राज्ञे । राजराजसमर्चिताय। राजार्धमौलये। राकेन्दुसमाय नमः। ३२०

ओं रम्भादिपूजिताय नमः । रम्भादिनाट्यमुदिताय । रामसेतुसमाश्रिताय । रङ्गस्थाय । रञ्जकाय । रम्याय । रममाणाय। रवप्रियाय। रक्षोनाथाय। रहोध्येयाय। रोगघ्ने। रिटिसन्नुताय। रीतिज्ञाय। रीतिकुशलाय। रिटिभृङ्गिसुहृत्तमाय। रैणुकेयार्चिताय। रेवातीरगाय। रिपुदर्पघ्ने। रुद्ररूपाय। रुद्रजापिने नमः। ३४०

ओं रुद्राक्षाभरणोज्ज्वलाय नमः । रुद्रलोकपतये । रुद्रताण्डवालोकनप्रियाय । रुद्राक्षलिङ्गिने । रुक्माभाय । रुक्मिणीपतिपूजितय । लक्ष्मवते । लम्बिकायोगिने । लम्बोदरविबोधकाय । लताखड्गधराय । लक्ष्मीजनकाय । लवणान्तकाय । लक्ष्मणार्च्याय । लोलजिह्वाय । लोलतण्डुल-भक्षकाय। लोलम्बवाससे। लोकेशाय। लघुकृते। लघुसिद्धिदाय। लङ्कादाहकराय नमः। ३६०

ओं लङ्कापतिशापप्रदायकाय नमः । लोमन्थकृते । लोमसिद्धपूज्याय। लौकिकवर्जिताय। लाभकृते। लोभविमुखाय। लाजप्रीताय। लवान्तकृते। लावण्यविग्रहाय। लीलाचतुराय। ललितार्चकाय। ललितामन्त्रभेदज्ञाय। ललिताय। ललिताकृतये। लघुन्यासकराय । लालीपकमुदे । लिकुचप्रियाय । लिङ्गार्चन-पराय। लिङ्गिने। लिङ्गाग्र्याय नमः। ३८०

ओं लिङ्गसंमुखाय नमः। लिङ्गशीर्षाय। लिङ्गमोदाय। लिङ्गिनामुपदेशकृते । लिङ्गतत्वकराय । लिङ्गत्रयविदे । लिपिभेदकृते । वर्मभृते । वनितासङ्गाय । वरिष्ठाय ।

वश्चितान्तकाय। वसुदेवात्मजगुरवे । वाममार्गपरायणाय । वालिने । वालाग्निसन्दग्धलङ्काय । वालारिगर्वघ्ने । वायुवेगाय । वायुसूनवे । वासुक्यादिविभूषणाय । वारणासीगताय नमः । ४००

ओं वातप्रमीवाह्याय नमः । वरप्रदाय । वीणाधराय । वैणिकर्षिनुताय । वैश्वानरोपमाय । वरिवस्याक्रमाभिज्ञाय । वराय । वाराशि-सम्भवाय । वरमत्स्याकृतये । वातपुरीशाय । वाक्प्रदायकाय । वागीशयोगिने । वाक्यज्ञाय । वातवर्षभयापघ्ने । वन्येन्द्रवाहनारूढाय । वृषभाय । वृषभेश्वराय । वृषभास्याय । वृषानन्दिने । वृषाणीकेलिकृते नमः । ४२०

ओं वृषाय नमः । विभूतिमते । विभूतीशाय । विभूत्युद्धूलिताकृतये । विभवे । विधीडिताय । वीतिहोत्राभासाय । विचक्षणाय । विनायकप्रियाय । विदुषे । विपुलाय । विबुधार्चिताय । विषापहारिणे । वीरेशाय । वीरभद्राद्दताय । विधये । विधिज्ञाय । विष्णुसुखदाय । वीरशैवाय । विरावकृते नमः । ४४०

ओं व्याघ्रकृत्तिधराय नमः । व्याघ्रपाद सन्नुत वैभवाय । व्याघ्रपादात्मज गुरवे । व्याधिघ्ने । व्याकृतिप्रियाय । व्यासदोः स्तम्भकृते । व्यासपूज्याय । व्याघ्रपुराश्रिताय । शाकराय । शाकराकाराय । शाकरास्याय । शशाङ्कभृते । शाम्भवाय । शाम्भवगुरवे । शालङ्कायनजात्मभुवे । शिलादतनयाय । श्रीमते । श्रीविद्यामन्त्रभेदविदे । शिवकामीमन्त्रयन्त्रगुरवे । शिवमयाय नमः । ४६०

ओं शिवाय नमः । शिवानन्दाय । शिवाभेदाय । शिवज्ञानिने । शिवोत्तमाय । शिवमार्गैकशरणाय । शिवयोगिने ।

शिवाश्रयाय । शिवदूताय । शिवसमाय । शिवकार्याय । शिवाश्रमाय। शिवतादात्म्यभाजे । शैवाय । शिवाद्वैताय । शिवप्रियाय। शिवाधीनाय। शिवज्ञानबोधकाय। शिववाहनाय। शिवाग्रण्ये नमः । ४८०

ओं शिवाग्रस्थाय नमः । शिवलिङ्गार्चनप्रियाय । शिवालयस्थाय । शैलादये । शिवध्यायिने । शिवार्चकाय । शिवभक्ताय । शिवासक्ताय । शिवभक्तप्रियङ्कराय । शिवनामजपासक्ताय । शिवधर्मपरायणाय । शिष्टाय । शिष्टार्चिताय। शुद्धाय। शुभकृते। शुभलक्षणाय। शुभ्राक्षमालाय। शोभावते। शाङ्कराय। शङ्कराकृतये नमः । ५००

ओं शीतवाचे नमः । शीतलाकाराय । शितहेतये । शिवाङ्घ्रिभृते। शिवेष्टाय। शिवपादाब्जहृदे। शिवैक्यविबोधकाय। शिलाभुक्तनयाय। शूराय। शिवक्षेत्रवराश्रिताय। शिवकामाय। शिवादेशहराय । शिवगुरवे । शमिने । शिवालय द्वारपालाय । शिवपार्षद वन्दिताय । शीलज्ञाय । शिवदाय । शीघ्रगामिने । शौर्यविवर्धनाय नमः । ५२०

ओं शिवान्तेवसतां श्रेष्ठाय नमः । शैवतन्त्रप्रवर्तकाय । शम्बरारातिसम्पूज्याय । शरणागतरक्षकाय । श्वेताम्बराय । श्वेतगुरवे । श्वेतारण्य सभाग्रगाय । शृङ्खलामणिभृते । शृङ्गिणे । शृङ्खलावीरसन्नुताय। षड्विधैक्यानुसन्धात्रे। षडाम्नाय प्रवर्तकाय। षोढान्यासन्यस्ततनवे। षडङ्गश्रुतिबोधकाय। षडाधारवरारोहाय। षड्रसाय। षण्मुखप्रियाय। षट्कोणगाय। षडूर्मिघ्नाय। षडध्वने नमः । ५४०

ओं षड्गुणाश्रिताय नमः । षडाहुतिप्रियाय । षष्ठाय । षष्ठीदेवीकृतादराय । षड्वत्सरकृतोद्वाहाय । षण्डहारिणे ।

षडङ्गविदे। सदानन्दाय। सभानन्दाय। समानन्दाय। समानिताय। सभाग्रगाय । सामहीनाय । सन्नुताय । सत्कृतये । सभाय । सभ्याय। सतामग्रगण्याय। सनकादिगुरवे। समाय नमः। ५६०

ओं सनत्कुमार विनुताय नमः । साङ्ख्याचार्याय । समेधिताय। सुयशसे। सुयशाजानये। सुराध्यक्षाय। सुरार्चिताय। सुमेधसे । सुन्दराय । सोमधारिणे । सामपारायणाय । सामरुद्रजपासक्ताय। सात्विकाय। सात्विकावृताय। सर्वस्मै। सर्वेश्वराय। सृक्किणे। सर्वशास्त्रार्थपारगाय। सरिदुत्तरतीरस्थाय। सत्यवादिने नमः ५८०

ओं समाहिताय। सर्वज्ञाय। ससुहृत्प्रीताय। संप्रीताय। सकलैर्नुताय। सर्वेश्वरेश्वराय। सर्वगणेशाय। साम्यवर्जिताय। सुयशाश्लिष्टदिव्याङ्गाय । सिंहासनमधिष्ठिताय । सर्वजेत्रे । सदापूज्याय। सपत्नीकाय। सदेष्टदाय। सदानन्दकराय। साधवे। सायुधाय। सानुगाय। सुधिये। सिद्ध्यादिमाय नमः। ६००

ओं सिद्धगुरवे नमः । सिद्धभाजे । सिद्धतन्त्रकृते । सुरभ्यानुमदोन्मत्ताय । सुन्दरानन्दवन्दिताय । हरभक्ताय । हरारावाय । हरसेनागणेश्वराय । हरपूजारताय । हारिणे । हरपार्षदसत्तमाय। हराग्र्याय। हरसन्देशहराय। हरिणभासुराय। हरशिष्याय। हराधिक्यवादिने। हरिहयार्चिताय। हानिहीनाय। हाटकाभाय। हनुमद्रूपभृते नमः। ६२०

ओं हराय नमः । हरये । हरोपमाय । हंसवाहाय । हर्यृक्षवाहनाय । हरसेवार्थमायातभक्तानुज्ञाप्रदायकाय । हरालयद्वारपालाय । हरसाम्यस्वरूपभृते । हुङ्कारस्तब्धदोर्दण्ड व्याससन्नुत वैभवाय। हेमाभाय। हेमभूषाढ्याय। हेमाद्रिस्थाय।

हितप्रदाय । हरदत्तवराय । हाराय । हरक्षेत्रनिवासकृते । हरिवक्त्राय । हेमवेत्रधराय । हेमाब्जसंस्थिताय । हेमवर्णवपुषे नमः । ६४०

ओं हेममकुटाय नमः । होममोदिताय । होत्रे । होतृगणानन्दिने । हुताशनसमुज्ज्वलाय । क्षमावते । क्षत्रसंपूज्याय । क्षराक्षरविभेदकृते । क्षमाभृत्तनयाजानिप्रियाय । क्षामविवर्जिताय । क्षीराभाय । क्षीरमुदिताय । क्षुद्रघ्ने । क्षुन्निवृत्तिकृते । क्षेत्रज्ञाय । क्षेत्रकृते । क्षेत्रपालाय । क्षेमप्रदायकाय । क्षौमाम्बराय । क्षौद्रकृत्यविमुखाय नमः । ६६०

ओं क्षोभनाशकृते नमः । क्ष्माकराय । क्ष्मापतिनुताय । क्षपणान्तकराय । क्षमिणे । क्षपेशहितकृते । क्षिप्रसिद्धिदाय । क्षितिरूपभृते । क्षणदाचरसंहर्त्रे । क्षीणपापाय । क्षयादिघ्ने । अतुलाय । अमलाय । अद्वैताय । अबलासहिताय । अचलाय । अद्वैतवादिने । अद्वैतशास्त्राचर्याय । अतिशोभनाय । अनुकूलकराय नमः । ६८०

ओं अभेदमुदिताय नमः । अद्भुताश्रयाय । असाध्यहीनाय । अश्रान्तशिवध्यान परायणाय । अग्रगण्याय । अगजाजा-निवाहाय । अतुलपराक्रमाय । अम्भोधिजाजानिरथगर्वघ्ने । अम्भोधिसम्भवाय । अष्टवीरशिवस्थानगताय । अष्टादश-सिद्धराजे । अधिभूतान्तरङ्गस्थाय । अमराय । अमरार्चिताय । अनश्नते शतरुद्रीय जपकृते । अक्षयाय । अव्ययाय । अनङ्गरिपुसम्भाव्याय । अर्जुनास्त्रोपदेशकृते । आधिव्याधिहराय नमः । ७००

ओं आढ्याय नमः । आश्रिताभीष्टदायकाय । आसेतुहिमशैलेशधामगाय । आकुलेक्षणाय । आर्द्रावृतप्रियाय ।

आमलोलपिष्टगुडाशनाय । आदीप्तशूलभृते । आभाविराजित-दिगन्तराय । आरग्वधसुमप्रीताय । आनन्दैक निकेतनाय । आकुण्डपार्षदस्तुत्याय । आर्यकुण्डभटप्रियाय । इष्टाय । इष्टार्थदाय । इन्द्रविनुताय । इतिहासविदे । इज्याशीलाय । इष्टदायिने । इङ्गितज्ञाय । इडाप्रियाय नमः । ७२०

ओं इन्दीवरसमच्छायाय नमः । इन्द्रनीलमणिप्रभाय । ईशानभक्ताय । ईशानवाहाय । ईशानपार्षदाय । ईतिबाधाहराय । ईड्याय । ईहात्रयविवर्जिताय । ईश्वरानन्दकृते । ईशकार्यकृते । ईशमानिताय । ईशोपदिष्टदहरविद्याय । ईशित्वसिद्धिभाजे । उमाभक्ताय । उमासूनवे । उमासूनुविहारमुदे । उपासकाय । उदाराङ्गाय । उपमन्युमुनेर्गुरवे । उर्वीधरपतये नमः । ७४०

ओं उर्वीरूपभृते नमः । उग्रनृत्तमुदे । ऊर्ध्वशायिने । ऊर्ध्वलिङ्गाय । ऊर्ध्वरेतसे । ऊर्ध्वगाय । ऊर्मिलाविनुताय । ऊनहीनाय । ऊर्जितशासनाय । ऋषभाय । ऋषभाकाराय । ऋषभास्याय । ऋषिप्रियाय । ऋग्वेदगदिताय । ऋद्धिकर्त्रे । ऋणविमोचकाय । ऋश्यमूकगिरिस्थायिने । ऋश्यशृङ्ग-मुनीडिताय । एकात्मवादिने । एकान्तपूज्याय नमः । ७६०

ओं एकान्तसंस्थिताय । एकविंशतिसाहस्रस्वमन्त्र-जपसिद्धिदाय । ऐरंमदसमच्छायाय । ऐरावणसमर्चिताय । ओषधीनां निदानज्ञाय । ओङ्कारार्णजपादृताय । औपम्यरहिताय । और्वसाराय । और्वमुनीडिताय । कमनीयाय । कराश्लिष्टसुयशाय । कृतिनां वराय । कवये । काव्यप्रियाय । कान्ताय । कान्तिमते । कनकप्रभाय । काशिवासिने । कारिकाकृते । काश्मीराङ्गाय नमः । ७८०

ओं कपालभृते नमः । कल्पस्थायिने । कल्पकर्त्रे । कलिघ्ने । कालिकाप्रियाय । कावेरीतीरगाय । काञ्चीमण्डनाय । किङ्करावृताय । किरातानुगताय । किञ्चिद्धसिताय । किंशुकप्रभाय । कीर्तिमते । कीशविनुताय । कुतुकिने । कूटसंस्थिताय । कुण्डोदरसखाय । कुन्तधराय । कुम्भमुनीडिताय । कुठारपाणये । कूश्माण्डगणराजे नमः । ८००

ओं क्रूरसत्वघ्ने नमः । कृष्णाय । कृष्णगुरवे । क्लेशाहराय । कैलास संस्थिताय । कोलाहलकराय । कोशपतये कोपाकुलेक्षणाय । कौन्तेय विनुताय । कौर्मसंस्थाय । कण्ठीरवासनाय । खड्गभृते । खण्डितारातये । खड्गरावण सेविताय । खुरध्वस्तगिरये । खेटाय । खेचरीगणसेविताय । खट्वाङ्गभृते । खरारातये । खण्डशीतांशु भूषणाय नमः । ८२०

ओं गदाधराय नमः । गतातङ्काय । गदहारिणे । गरापहाय । गद्यप्रियाय । गानलोलाय । गाथानेकाय । गिरीश्वराय । गीतगीर्वाणनिचयाय । गिरिशार्चनतत्पराय । गुडतण्डुलभुजे । गुह्याय । गुहानन्दिने । गुणाकराय । गुरवे । गूढचराय । गोपाय । गोपतये । गोत्रवर्जिताय । गोविन्दानन्ददाय नमः । ८४०

ओं गौरीभक्ताय नमः । गन्धर्ववन्दिताय । गण्डलालाजलाय । गन्धिने । गन्धपङ्किलचर्चिताय । घण्टाग्रपूज्याय । घण्टेशाय । घण्टादामविभूषिताय । घण्टाध्वनिसमायात शिवभक्तसमर्चिताय । घृणानिधये । घृतामोदाय । घटवाद्यविनोदकृते । चक्रतुण्डाय । चतुष्पादाय । चक्रपाणये । चतुर्भुजाय । चतुराय । चपलासङ्गाय । चरकार्च्याय । चिरन्तनाय नमः । ८६०

ओं चिदम्बरसभानन्दिने । चित्रकर्मणे । चमूपतये । चमत्कारकराय । चण्डीमित्राय । चूतफलप्रियाय । चोरहन्त्रे । चिरञ्जीविने । चीनाम्बर विराजिताय । छत्रिणे । छत्रधराय । छायापतीड्याय । छात्रमोदकृते । छविदीप्ताय । छादितारये । छेत्रे । छन्दोमयाकृतये । जनिहीनाय । जनानन्दाय । जनकानन्दनाय नमः । ८८०

ओं जिताय । जाह्नवीतीरगाय । जाताय । जाम्बूनदसमप्रभाय । जागरूकाय । जपानन्दिने । जपालये । जपयज्ञकृते । जप्येश्वरकृतावासाय । जन्तुवर्गभयापहाय । ज्वरान्तकाय । ज्वलत्केशाय । ज्वलिताय । जाम्बवत्प्रियाय । जम्बीरान्नप्रियाय । जम्बुकेशस्थाय । जृम्भकान्तघ्ने । झल्लरी वाद्यभृते । झिल्लीनुताय । झंझानिलान्तकाय नमः । ९००

ओं झलंझलध्वनिकराय नमः । झङ्कारिभ्रमराकुलाय । ज्ञानिने । ज्ञाताखिलाय । ज्ञात्रे । ज्ञानशास्त्रोपदेशकृते । ज्ञानाचार्याय । ज्ञानलिङ्गप्रियाय । ज्ञानरसायनाय । ज्ञानानन्दरसास्वादिने । ज्ञानसोपानसंस्थिताय । टङ्कादिहेतिभृते । टीकाकर्त्रे । टिप्पणकारकाय । डमरुध्वनि टीकाकृते । डमरुध्वान मोदिताय । ढक्कावाद्यधराय । डिण्डिमुण्डादि भट संवृताय । डित्थप्रियाय । डपित्थेड्याय नमः । ९२०

डुण्डिराजसहोदराय नमः । डम्भहीनाय । डामरेड्याय । डाडिमीसुमपजिताय । तत्वविदे । तपनानन्दिने । तरुणाय । तरुणीसखाय । तार्किकाय । तण्डुविनुताय । तपस्विने । तरुमूलगाय । ताण्डवालोकमुदे । तन्त्रिणे । तन्त्राचार्याय । तपोनिधये । तीव्राय । तीव्रतराय । तिल्लवनवासिने । त्रिलोचनाय नमः । ९४०

ओं त्र्यक्षदासाय नमः। त्रिलोकेशाय। तौर्यत्रिकविधानकृते। तीर्थतीरगताय । तुर्याय । तट स्थाय । तण्डु लप्रियाय । तिलापूपप्रीतमनसे। तुषाराचलसंस्थिताय। तरस्विने। तापसंहर्त्रे। तोयदोद्वेगनाशकृते। स्थिरप्रज्ञाय। स्थाणुभक्ताय। स्थिताय। स्थित्यादिकार्यविदे । स्थविष्ठ ाय । स्थावराभिज्ञाय । स्थलपद्मान्तरस्थिताय। दमिने नमः। ९६०

ओं दमनसंप्रीताय । दनुजारये । दरिद्रघ्ने । दयावते । दहरानन्दिने। दानप्रीताय। दुरासदाय। दुष्ट दूराय। दूरदृश्याय। दूर्वाबिल्वदलप्रियाय । दोषहीनाय । दण्ड कारिणे । दण्ड ायुधपरिष्कृताय । धर्माधाराय । धर्मरूपिणे । धर्मज्ञाय । धर्मपूजिताय। धर्मिणे। धर्मप्रियाय। धीमते नमः। ९८०

ओं ध्यानयोगरताय नमः । ध्वनये । ध्वनिविद्या-प्रयोगज्ञाय। धन्वन्तरिसमर्चिताय । धनप्रदाय । धनिने । धान्यदायिने । धनदवन्दिताय । धन्याय । धौम्यार्चिताय । धौतवस्त्रभृते। ध्वान्तभास्कराय। धीराय। धीरार्चिताय। धृष्णवे। धृतिमते । धिषणाप्रदाय । धर्माधाराय । धर्मपादाय । धरणीगोवृषेश्वराय नमः। १००० ओं नन्दिकेश्वराय नमः।

—*—

## ॥ श्रीब्रह्मचामुण्डि कासहस्रनामावलिः ॥

### (बकारादि फकारान्ता)

(ब्रह्मचामुण्डिकेयं चिदम्बरक्षेत्रमधितिष्ठ ति । नटेशेन शम्भुना सह नटनस्पर्धायां ऊर्ध्वताण्डवे विजिता चरणयोः शृङ्खलया बद्धा उत्तरदिशो रक्षादैवतत्वेन शान्ता वटभद्रकाली जपमाला - शूल - श्वेताब्ज - मधुपात्रधारिणी पद्मासनस्था

चतुर्मुखी विराजते । तिल्लैयम्मन् - तिल्वाम्बिकेति तत्रत्या अभिदधते।)

ओं चतुर्मुखीं चतुर्हस्तां तिल्लैयम्बेति विश्रुताम्।
ब्रह्मचामुण्डिकां देवीं नमामि परमेश्वरीम्।। १

दाक्षायणीति कुटिलेति कुहारिणीति
श्रीकालिकेति कमलेति कलावतीति।
एका सती भगवती परमार्थतोऽपि
सन्दृश्यसे बहुविधा ननु नर्तकीव।। २

वेदाननां वेदकराम्बुजां तां त्रिशूलरुद्राक्षस्रगब्जपात्रान्।
धरां सदा चिन्तयतीं महेशं श्रीब्रह्मचामुण्डिमहं नमामि।। ३

चतुर्हस्तपद्मैर्धृताम्भोजपात्र
त्रिशूलाक्षदामां त्रिणेत्रारविन्दाम्।
शवस्थां च वीरासनस्थां च दुर्गां
स्मराम्यद्य चित्ते सदाऽहं सुखाप्त्यै।। ४

चतुर्वेदशिरोररूप चतुर्वक्त्रकराम्बुजाम्।
चक्रशङ्खगदाखड्गधरां चण्डीं सदा भजे।। ५

वेदवक्त्रां चतुर्हस्तां सर्वालङ्कारभासुराम्।
त्रिशूलं चाक्षमालां च पानपात्राब्जशोभिनीम्।। ६

प्रेतासनस्थितां देवीं ब्रह्मचामुण्डिरूपिणीम्।
ब्रह्ममायामयीं कालीं सन्ततं चिन्तयाम्यहम्।। ७

बालार्कसदृशाकारां बालचन्द्रार्धशेखराम्।
ब्रह्मचामुण्डिकामन्तर्बहुधा प्रणमाम्यहम्।। ८

ओं ह्रीं । ब्रह्मचामुण्डिकायै नमः । ब्रह्मजनन्यै । ब्राह्मणप्रियायै । ब्रह्मज्ञानप्रदायै । ब्रह्मविद्यायै । ब्रह्माण्ड-नायिकायै । बृहत्सामस्तुतायै । ब्रह्ममायायै । ब्रह्मर्षिपूजितायै । ब्राह्मीमाहेश्वरीमुख्यशक्तिबृन्दसमावृतायै । ब्रह्मादिविनुतायै । ब्रह्मपत्न्यै । ब्रह्मपुरस्थितायै । ब्रह्मतालप्रियायै । ब्रह्मपञ्चमञ्चक-शायिन्यै । बृहदैश्वर्यदायै । बन्धहीनायै । बुधसमर्चितायै । बालाम्बायै । बाणकुसुमायै नमः । २०

ओं बगलामुखिरूपिण्यै नमः । बिन्दुचक्रस्थितायै । बिन्दुतर्पणप्रीतमानसायै । बन्धूकसुमनोरागायै । बादरायण-देशिकायै । भद्रायै । भद्रार्चितायै । भद्रकाल्यै । भर्गस्वरूपिण्यै । भगाराध्यायै । भगवत्यै । भार्गव्यै । भार्गवार्चितायै । भवान्यै । भाग्यदायै । भीमायै । भामत्यै । भीमसैनिकायै । भण्डासुर-शिरश्छेत्र्यै । भाषासर्वस्वदर्शिन्यै नमः । ४०

ओं भुजङ्गनटनोद्युक्तायै नमः । भुजनिर्जितदानवायै । भ्रुकुटिक्रूरवदनायै । भ्रूमध्यनिलयस्थितायै । भेरुण्डायै । भेदनिर्मुक्तायै । भैरव्यै । भैरवार्चितायै । भेतालनटनप्रीतायै । भोगिराजाङ्गुलीयकायै । माधव्यै । माधवाराध्यायै । मधुमांसप्रियायै । मह्यै । महाब्धिमेखलायै । मार्गदुर्गायै । माङ्गल्यदायिन्यै । मणिमण्टपमध्यस्थायै । माणिक्याभरणा-न्वितायै । मन्त्ररूपायै नमः । ६०

ओं महाराज्ञ्यै नमः । महासिद्धालिसंवृतायै । मनोन्मन्यै । मनोगम्यायै । महादेव्यै । पतिव्रतायै । मार्यै । मारान्तकायै । क्षोभकारिण्यै (मारान्तकक्षोभकारिण्यै) । मीनलोचनायै। मुद्रायै। मुद्राप्रियायै। मूर्ख-नाशिन्यै। मेषभक्षिण्यै। मिथुनासक्तहृदयायै।

मोहिताशेषविष्टपायै । मौनव्याख्यापरायै । मौनसत्यचिन्मात्र-लक्षणायै । मौञ्जीकच्छधरायै । मौर्वीद्विरेफमुखरोन्मुखायै नमः । ८०

ओं महाव्रतक्रतुप्रीतायै नमः । माणिभद्रसमर्चितायै । मालतीकुन्दमालाढ्यायै । माषौदनसमुत्सुकायै । मात्रे । मरकतच्छायायै । मातङ्ग्यै । मतिसाक्षिण्यै । मन्दराद्रिकृतवासायै । महादेव्यै । महेश्वर्यै । महिषासुरकच्छेदनर्तक्यै । मुण्डखण्डिन्यै । मूकाम्बायै । मुखजामोदजनकालोकनप्रियायै । यन्त्ररूपायै । यशोदात्मजातसन्नुतवैभवायै । याकिनीयक्षरक्षादिवृतायै । यजनतत्परायै । यशस्कर्यै नमः । १००

ओं यमाराध्यायै नमः । यजमानाकृतये । यतये । यायजूकार्चितपदायै । यज्ञेश्यै । यक्षिणीश्वर्यै । यामिन्यै । यजनोत्साहायै । यामिनीचरभक्षिण्यै । यासापद्मधरायै । यासापद्मान्तरपरिष्कृतायै । यज्वबृन्दप्रियायै । यष्ट्यै । यान्तवर्णस्वरूपिण्यै । याथार्थ्य विग्रहायै । योग्यायै । योगिन्यै । योगनायिकायै । योगभयंकर्यै । योग्यायै नमः । १२०

ओं राजबृन्दसमर्चितायै नमः । राजराजेश्वर्यै । राज्यै । राजीवनयनप्रियायै । राकिन्यम्बायै । रामनुतायै । रमावाणी-निषेवितायै । रणरङ्गनट्यै । रत्नमञ्जीरचणाम्बुजायै । रक्त-चामुण्डिकायै । रात्रिदेवतायै । रागलोलुपायै । रक्तबीजप्रशमन्यै । रजोगन्धनिवारिण्यै । रेणुकायै । रेणुकासूनुस्तुत्यायै । रेवा-विहारिण्यै । रोगघ्न्यै । रोषनिर्दग्धायै । शत्रुसेनानिवेशिन्यै नमः । १४०

ओं रोहिणीशांशुसंभूतशरीरत्नवितानकायै नमः । रुद्रचामुण्डिकायै । रुक्मसदृशायै । रुधिरप्रियायै । रुद्राण्यै ।

रुद्रवनितायै । रुरुराजहितैषिण्यै । रुद्राट्टहाससंक्षुभ्यज्जगत् सृष्टिविधायिन्यै। रुद्रताण्डवसामर्थ्यदर्शनोत्सुकमानसायै। रौद्र्यै। रौद्रास्त्रनिर्दग्धराक्षसायै। राहुपूजितायै। रक्षाकर्त्र्यै। रमायै। रम्यायै। रञ्जिन्यै । रसिकावृतायै । रागालापपरब्रह्मशिरोमाला-प्रसाधनायै। राजव्रातकिरीटांशु नीराजितपदाम्बुजायै । रसनालेपितक्रूररक्तबीजकलेबरायै नमः। १६०

ओं रयध्वस्ताचलायै नमः । रागहीनमानसहंसिन्यै । लक्ष्म्यै। लक्ष्मीशसहजायै। लक्ष्मणाग्रजवन्दितायै । लाकिन्यै । लङ्घितांभोधिनिवहायै । ललिताम्बिकायै । लाक्षारसाञ्जित-पदायै। लघुश्यामायै । लतातनवे । ललदोष्ठदलद्वन्द्ववदनायै । लक्ष्यदूरगायै । लयादिकर्त्र्यै । लोमालिलतानाभीसरःकट्यै । लाजहोमप्रियायै। लम्बमुक्ताभासुरनासिकायै। लाभालाभादि-रहितायै। लास्यदर्शनकोविदायै। लज्जावत्यै नमः। १८०

ओं ललत्प्रोच्चकेशायै नमः । लम्बिपयोधरायै । लीलापीतोज्झिताम्भोधये। लीलास्वीकृतविग्रहायै। लम्बितारि-शिरोहस्तायै । लोकरक्षापरायणायै । लोकमात्रे । लोकसृष्टि-स्थितिसंहारकारिण्यै । लोकातीतपदायै । लोकवन्द्यायै । लोकैकसाक्षिण्यै । वन्द्यायै । वाग्वादिन्यै । वन्यमांसाहारायै । वनेश्वर्यै। वशिन्यादिस्तुतायै। वह्निज्वालोद्गारिमुख्यै। वरायै। वादित्रध्वनिसंभ्रान्तदिग्गजालये। विधीडितायै नमः। २००

ओं वाञ्छाकल्पलतायै नमः । वाण्यै । वाक्प्रदायै । वागधीश्वर्यै । वाङ्मनोऽतीतविषयायै । वामाचारसमुत्सुकायै । वाजपेयाध्वरानन्दायै । वासुदेवेष्टदायिन्यै । वाराङ्गनानीतपूर्ण-कुम्भदीपालिमण्डितायै । वामस्तनाश्लिषद्धस्तपद्मशम्भु-विहारिण्यै। वारितासुरदर्भ(र्प)श्रिये । वार्त्रघ्नीदर्परूपण्यै ।

वारिजासनशीर्षालिमालायै । वार्धिसरोवरायै । वाराह्यै । वास्तुमध्यस्थायै । वासवान्तःपुरेष्टदायै । वार्तात्यै । वारुणीविद्यायै । वरुणारोग्यदायिन्यै नमः । २२०

ओं वक्षोजयुग्मविरहासहिष्णुकरशङ्करायै नमः । वनदुर्गायै । विन्ध्यशैलवासिन्यै । वामकेश्वर्यै । वामदेव-वसिष्ठादिपूजितायै । वारितप्रभायै । विरिञ्चिशिक्षणोद्युक्त-मधुकैटभनाशिन्यै । विजयायै । विजयस्तुत्यायै । विरूपायै । विश्वरूपिण्यै । विश्वमात्रे । विशालाक्ष्यै । विरागायै । वीशवाहनायै । विप्रशत्रुकुटुम्बघ्न्यै । विप्रपूज्यायै । विषापहायै । वीतरागावृतायै । व्याघ्रपादनृत्तप्रदर्शिन्यै नमः । २४०

ओं वीरभद्रहतोन्मत्तदक्षयज्ञाश्रितामरायै नमः । वेदवेद्यायै । वेदरूपायै । वेदाननसरोरुहायै । वेदान्तविषयायै । वेणुनादज्ञायै । वेदपूजितायै । वौषण्मन्त्रमयाकारायै । व्योमकेश्यै । विभाकर्यै । शङ्कर्यै । शङ्करार्धाङ्गहरायै । शाकरवाहनायै । शशाङ्कशेखरायै । शस्त्रधरायै । शतमुखाम्बुजायै । शब्दजालोद्भवड्ढकारवा-सन्दिग्धतापसायै । शरणागतसन्त्राणपरायणपटीयस्यै । शम्भुकोपाग्निनिर्दग्धमदनोत्पादकेक्षणायै । शबर्यै नमः । २६०

ओं शबरीदुर्गायै नमः । शरभेशच्छदाकृतर्यै । शापापनोदनचणायै । शङ्कादोषादिनाशिन्यै । शातोदर्यै । शान्तिमत्यै । शरच्चन्द्रनिभाननायै । शक्तिबृन्दावृतायै । शब्दमय्यै । श्रीचक्ररूपिण्यै । शिववामाङ्कपर्यङ्कायै । शिवकामेश्वर्यै । शिवायै । शङ्करालिङ्गनानन्दमेदुरायै । शीतलाम्बिकायै । शूलिन्यै । शूलखड्गाहिशङ्खचक्रगदाधरायै । श्रीदायै । श्रीदाननिपुण-लोचनायै । श्रीपतिप्रियायै नमः । २८०

ओं श्रीविद्यायै नमः । शुभदायै । शुभ्रवस्त्रायै । शुम्भासुरान्तक्यै । शुक्लदंष्ट्राग्रसन्दीप्तपातालभ्रान्तपन्नगायै । शुभ्रासनायै । शूरसेनावृतायै । शूलादिनाशिन्यै । शूकवृश्चिकनागाखुवृकहिंस्राभिसंवृतायै । शाम्भव्यै । शम्भुहस्ताब्जलीलारुणकरावल्यै । शुकादिद्विजबृन्दोक्तिस्तब्धमानसगीष्पत्यै । शुक्रमण्डलसंकाशमुक्तामालायै । शुचिस्मितायै । शोकाग्निशोषणोद्युक्तबडबायै । श्रोत्रियावृतायै । षड्जादिस्वरनिर्मात्र्यै । षडङ्गयुवतीश्वर्यै । षड्भावरहितायै । षण्डकण्टक्यै नमः । ३००

ओं षण्मुखप्रियायै नमः । षट्कोणमध्यनिलयायै । षडर्णायै । षान्तरूपिण्यै । षड्रसास्वादमुदितायै ! षष्ठीशादिमदेशिकायै । षडूर्मिध्न्यै । षडध्वान्तपदारूढस्वरूपिण्यै । षोढान्यासमयाकारायै । षोडशाक्षरदेवतायै । षडाधाराब्जनिलयायै । षाड्गुण्यश्रीप्रदायिन्यै । सनकादिमुनिध्येयायै । सन्ध्यानाट्य-विशारदायै । सामोद्गीतनिजानन्दमहिमालये । सनातनायै । साध्व्यै । संगीतरसिकायै । सर्वदायै । सर्वमङ्गलायै नमः । ३२०

ओं सरोजलविहारोद्यत्प्रियाकृष्टोत्तरांशुकायै नमः । सरस्वत्यै । सुराराध्यायै । सुरापानप्रियायै । सुरायै । सुधाब्धिमध्यनिलयायै । स्वर्णद्वीपान्तरस्थितायै । सुधासिक्तालवालोद्यत् कायमानलतागृहायै । सुरद्रुसङ्कुलाभोगतटायै । सौदामिनीनिभायै । सांख्यतत्वज्ञनिवहव्यापिसालायै । सुधेश्वर्यै । सूर्यचन्द्रांशुधिक्कारिप्रभारत्नालिमण्डपायै । सिंहासनगतायै । सर्वशृङ्गाररसवारिधये । सौगन्धिकमरुद्वेगमोदितानङ्गतन्त्रिण्यै । सुभगायै । सुन्दर्यै । सुभ्रुवे । सद्रूपायै नमः । ३४०

ओं सत्यलक्षणायै नमः । सावित्र्यै । सङ्गनिर्मुक्तायै । सतीश्र्यै । सर्वतोमुख्यै । सौभाग्यमन्त्रिण्यै । सत्यवादायै सागरमेखलायै । सारस्वतप्रदायै । सामायै । संसारार्णवतारिण्यै । सिद्धसंघावृतायै । साध्यवन्दितायै । साधुसत्कृतायै । सकलायै । सच्चिदानन्दलक्षणायै । सौख्यदायिन्यै । सुरभीकेशसंभ्रान्तद्विरेफ-मुखरान्वितायै । सौन्दर्यमोहिताधीनवल्लभायै । सन्ततिप्रदायै नमः । ३६०

ओं सोमपानोद्भवामोदविप्रगीतापदानकायै । सोम-यागप्रियायै । सोमसूर्यवह्निविलोचनायै । समस्तलोकजनन्यै । सभानटनरञ्जिन्यै । सरःपुलिनलीलार्थियुवतीनिवहोत्सुकायै । साध्यासाध्यादिरहितायै । स्वतन्त्रायै । स्वस्तिरूपिण्यै । स्वश्वासोच्छ्वासभुवनमोचनोन्मोचनायै । स्वधायै । हंसिन्यै । हंसमन्त्रार्थायै । हंसवाहायै । हराङ्गहृते । हादिविद्यायै। हानि-हीनायै । हाकिन्यै । हरिचण्डिकायै । हाहाकाररवोद्भीतदनुजायै नमः । ३८०

ओं हारमञ्जुलायै नमः । हरालिङ्गनशीतांशून्मिषन्नेत्र-कुमुद्वत्यै । हालाहलविषोद्विग्नविष्टपानेकरक्षक्यै । हरिनाभि-समुद्भूतविरिञ्चिविनुतायै । हरायै । हारावलीप्रभादीप्त-हरिदन्ताद्रिगह्वरायै । हयारूढायै । हयग्रीवविनुतायै । हतकिल्बिषायै । हिमाद्रितनयायै । हीरमकुटायै । हारपन्नगायै । हेमपद्मधरायै । हेमवर्मराजसमर्चितायै । हुताशनधरायै । होमप्रियायै । होत्र्यै । हयेश्वर्यै । ह्रीमत्यै । हृदयाकाशतरण्यै नमः । ४००

ओं ह्रींपरायणायै नमः । हृद्यायै । हृद्यमनोनित्यवासायै । हरकुटुम्बिन्यै । लक्षितायै । लोभिन्यै । लोभहीनायै । लोकेश्वर्यै ।

लघवे । लोकचित्तविदूरस्थायै । लोमलम्ब्यण्डजालकायै । लोकातीताकृतये । लब्धमार्गत्यागपरान्तक्यै । लोमावलिलता-लम्बिस्तनयुग्मनताननायै । लोकानुल्लङ्घितनिजशासनायै । लब्धविग्रहायै । लीलागतिपराभूतहंसलीलाविनोदिन्यै । लावण्य-दर्शनोद्विग्नरतीशायै । लघुभाषिण्यै । लाक्षालक्ष्मीतिरस्कारि-युगलाधरपल्लवायै नमः । ४२०

ओं लीलाशुकोक्तिमुदितायै नमः । लीलामृगविहारिण्यै । लीलानन्दनकल्पद्रुलताडोलाविहारिण्यै । लघूक्तिवल्गुस्तिमित-वाणीत्यक्त विपञ्चिकायै । ललन्तिकामणीभास्वन्निटिल-श्रीमुखाम्बुजायै । ललाटार्धनिशानाथकलङ्कोद्भासिलोचनायै । क्षमायै । क्षमाधरसुतायै । क्षामक्षोभविनाशिन्यै । क्षिप्रसिद्धि-प्रदायै । क्षिप्रगमनायै । क्षितिपालिन्यै । क्षीराब्धितनयायै । क्षीरघृतमध्वासवार्चितायै । क्षीणपुण्यासुहृते । क्षीरवर्णायै । क्षयविवर्जितायै । क्षणदाच्यर्यै । क्षपानाथसुधार्द्रकबर्यै । क्षितये नमः । ४४०

ओं क्षणदाचरसंहारचतुरायै नमः । क्षुद्रदुर्मुखायै । क्षेमंकर्यै । क्षेत्रपालवन्दितायै । क्षेत्ररूपिण्यै । क्षौमाम्बरधरायै । क्षत्रसंप्रार्थितजयोत्सवायै । क्षीराभाहारमुदितायै । क्ष्म्रच्यूंमन्त्रा-प्तेष्टयोगिराजे । क्षुधार्तिदीनसन्त्राणायै । अमृतसंपूर्णपात्रभृते । अजायै । अजांशसमुद्भूतायै । अमरालीवृतगोपुरायै । अनन्तायै । अनन्यसुलभप्रियायै । अद्भुतविभूषणायै । अश्वमेधमघावासहविः पुञ्जकृतादरायै । अगण्यायै । अगम्यमहिमायै नमः । ४६०

असुरप्रेतासनस्थितायै नमः । अश्वसेनावृतायै । अनेकपारूढायै । अगजन्मभुवे । अपारकरुणापूरनिर्भरेखाञ्ज-नाक्षिण्यै । अद्रिदुर्गायै । अणिमासिद्धिदापितेष्टामरावल्ल्यै ।

अनूरुकरसङ्काशायै । अखण्ड ानन्दस्वरूपिण्यै । अरविन्दाक्षि-मालालिपात्रशूलधरायै । अनघायै । अत्युग्राजिनट च्छ त्रुक-बन्धानेककोटि कायै । अमृताम्भोधिमध्यस्थायै । अणिमा-सिद्धिमुखाश्रितायै । अजरायै । अमृत्युजनन्यै । अकालान्त-कभीकरायै । अन्नपूर्णायै । अपरायै । अलक्ष्यायै नमः । ४८०

ओं अम्बिकायै नमः । अघविनाशिन्यै । अन्धीकृतद्विजारातिनेत्रायै । अत्युग्राट्ट हासिन्यै । आकाश-विग्रहायै । आनन्ददात्र्यै । आज्ञाब्जभासुरायै । आद्यन्तरहितायै । आचार्यायै । आदिक्षान्तार्णरूपिण्यै । आद्यायै । अमात्यनुतायै । आज्यहोमप्रीतायै । आवृताङ्गनायै । आधिहीनायै । आसुरी-दुर्गायै । आजिसंक्षोभितासुरायै । आश्रिताखिलदेवादि-बृन्दरक्षणतत्परायै । आधारकमलारूढ ायै । आधाराधेयवर्जितायै नमः । ५००

ओं आश्चर्यविग्रहायै नमः । आचार्यसेवितायै । आगमसंस्तुतायै । आचारतत्परस्वान्तपद्मसंस्थायै । आढ्य-पूजितायै । आत्मायत्तजगच्चक्रायै । आत्मारामपरायणायै । आदित्यमण्ड लान्तःस्थायै । आदिमध्यान्तवर्जितायै । आधोरणाज्ञाशुण्ड ाग्राकृष्ट ासुरगजावृतायै । इन्द्राक्ष्यै । इन्द्रार्चितायै । इन्द्राण्यै । इन्दिरापतिसोदर्यै । इन्दिरायै । इन्दीवरश्यामायै । इरंमदसमप्रभायै । इष्ट ार्तिघ्न्यै । इष्ट वरदायै । इभवक्त्रप्रियङ्कर्यै नमः । ५२०

ओं इच्छ ाज्ञानक्रियाशक्तिरूपायै नमः । इरावतीस्तुतायै । इभकुम्भाभवक्षोजद्वयायै । इक्षुधनुर्धरायै । इभदन्तोरुनयनायै । इन्द्रगोपसमाकृत्यै । इभशुण्ड ोरुयुगलायै । इन्दुमण्ड लमध्यगायै । इन्द्राणीरचितश्वेतच्छ त्रायै । ईड ाभक्षणप्रियायै । ईश्वर्यै ।

ईश्वरप्रियायै। ईशताण्डवालोकनोत्सुकायै । ईशित्वसिद्धि-संप्रार्थितापसायै। ईषत्स्मिताननायै। ईक्षणोत्पन्नभुवनकदम्बायै। ईड्यवैभवायै। उल्कामुख्यै। उमादेव्यै। उन्मत्तक्रोधभैरव्यै नमः। ५४०

ओं उदासीनायै नमः। उडुराड्वक्त्रायै। उग्रकृत्यविदूषिण्यै। उच्चनीचादिरहितायै । उरुकान्तारवासिन्यै । उरुस्यन्दन-संबद्धकोट्यश्वायै । उरुपराक्रमायै । उत्साहरहितेन्द्राण्यै । उरुसन्तोषितामरायै । उपाधिहीनायै । उपादानकारणायै । उन्मत्तनर्तक्यै । ऊहापोहविहीनायै । ऊरुजितरम्भामनोहरायै । ऊर्ध्वप्रसारितांघ्रीशदर्शनोद्विग्नमानसायै । ऊर्जिताङ्गायै । ऊढभुवनकदम्बायै । ऊर्ध्वमुखावल्यै । ऋग्वेदसंस्तुतायै । ऋद्धिदायिन्यै नमः। ५६०

ओं ऋणमोचिन्यै नमः । ऋद्धिकाममनुव्रातसत्रयाग-समर्चितायै । ऋजुमार्गपरप्रीतायै । ऋषभध्वजभासुरायै । ॠकारवाच्यायै। ॠक्षादिवृतायै। ॠकारनासिकायै। ऌकारिण्यै। ऌकारोष्ठायै। ऌवर्णाधरपल्लवायै। एकाकिन्यै। एकमन्त्राक्षरायै। एधितोत्साहवल्लभायै । ऐश्वर्यदात्र्यै । ऐङ्कारवादिवागीश-सिद्धिदायै। ओजःपुञ्जघनीसान्द्ररूपिण्यै। ओङ्कारमध्यगायै। ओषधीशमनुप्रीतायै । औदार्यगुणवारिधये । औपम्यरहितायै नमः। ५८०

ओं अनर्घ्यकैवल्यपददायिन्यै नमः । अघहीनायै । आश्रितब्रह्मनिष्ठारिप्राणभक्षिण्यै। कादिविद्यामय्यै। काम्यायै। काञ्चनाभायै। कलावत्यै। कार्तवीर्यद्विसाहस्रदोर्दण्डपटहध्वन्यै। कामेश्वर्यै । कामराजमनुप्रीतायै । कृपावत्यै । कर्पूराम्बायै । कालरात्र्यै। काल्यै। कलिविनाशिन्यै। किटिवक्त्राधिकारोद्य-

द्रणप्रोत्साहवादिन्यै । कीर्तिप्रदायै । कीर्तिमत्यै । कुमार्यै । कुलसुन्दर्यै नमः । ६००

ओं कुन्तायुधधरायै नमः । कुब्जिकाम्बायै । कुध्रविहारिण्यै । कुलागमरहस्यज्ञ वाञ्छादानपरायणायै । कूटस्थितिजुष्यै । कूर्मपृष्ठजित्प्रपदान्वितायै । केशाकेशिचणायै । केशिराक्षसाधिप-मर्दिन्यै । केकाशब्दतिरस्कारिबाणासनमणीरवायै । कैशिक्यार-भटीरीतिस्तुतरक्तेश्वरीप्रियायै । कैलासोत्तुङ्गशृङ्गाग्रविलासेश-पराजितायै । कैतकच्छदसन्ध्याभविशङ्कितकचाम्बुदायै । कोपहुंकार सन्त्रस्तससेनासुरनायकायै । कोकाहितकरस्पर्धि-नखायै । कोकिलवादिन्यै । कौसुंभास्तरणायै । कौलमार्ग-निष्ठान्तरस्थितायै । कञ्जाक्ष्यै । कञ्जविनुतायै । कञ्जजाति-प्रियङ्कर्यै नमः । ६२०

ओं कबरीबन्धमुखरीभ्रमरीभ्रमरालकायै नमः । करवाल-लताधारभीषणायै । कौमुदीनिभायै । कौण्डिन्यान्वयसंभूतायै । करिचर्माम्बरप्रियायै । कङ्कणाहिगणक्षेमवचनोद्विग्नताक्ष्र्यकायै । कोलाहलरयोद्रेकरिंखज्जम्बुकमण्डलायै । कौपीनशिष्टविप्रर्षि-स्तुतायै । कौबि(शि)कदेशिकायै । खड्गखेटकदोर्दण्डायै । खट्वाङ्गयै । खड्गसिद्धिदायै । खण्डितासुरगर्वाद्र्यै । खलादृष्ट-स्वरूपिण्यै । खण्डेन्दुमौलिहृदयायै । खण्डितार्केन्दुमण्डलायै । खरांशुतापशमन्यै । खस्थायै । खेचरसंस्तुतायै । खेचर्यै नमः । ६४०

ओं खेचरीमुद्रायै नमः । खेचराधीशवाहनायै । खेलापारावतरतिप्रीतायै । खाद्यायितान्तकायै । गायत्र्यै । गानसन्तुष्टायै । गन्धर्वाधिपतीडितायै । गरिमालघिमासिद्धि-वृतायै । ग्रामादिपालिन्यै । गर्वितासुरदाराश्रुपङ्क्ताजिव-

सुन्धरायै । गगनायै । गगनान्तःस्थायै । गगनाकारमध्यमायै । गदाधर्यै । गदाघातमूर्च्छितानेकपासुरायै । गजारूढायै । गजमुख्यै । गाथागीतामराङ्गनायै । गर्वितायै । गन्धवसनायै नमः । ६६०

ओं गन्धवाहसमर्चितायै नमः । गन्धर्ववनितामाला-मोदिन्यै । गर्वनाशिन्यै । गिरिदुर्गायै । गिरीशानसुतायै । गिरिवराश्रयायै । गिरीन्द्रक्रूरकठिनकर्षद्धलवरायुधायै । गीतिशास्त्रगुरवे । गीतिहृदयायै । गीर्गिरीश्वर्यै । (गिरे । गिरीश्वर्यै ।) गीर्वाणदनुजाचार्यपूजितायै । गृध्रवाहनायै । गुह्यायै । गुह्यार्चितायै । गुह्यस्थानबिन्दुस्वरूपिण्यै । गुह्यागमरहस्यज्ञायै । गुह्यकानन्ददायिन्यै । गोमेदकमणीकर्णकुण्डलायै । गोप-पालिन्यै । गोदावरीनदीतीरवासिन्यै नमः । ६८०

ओं गुणवर्जितायै नमः । गुणातीतायै । गुरवे । गौर्यै । गोप्त्र्यै । गोविन्दसोदर्यै । गङ्गागर्वङ्कषोद्युक्तरुद्रप्रोत्साह वादिन्यै । गुञ्जामणिगणप्रोतमालाभासुरकन्धरायै । गुहेष्टदायै । गुहावासि-योगिचिन्तितरूपिण्यै । गुरुमूर्त्यै । गुणाम्भोधये । गुणागुण-विवर्जितायै । गुडपायससन्तुष्टहृदे । गुप्ततरयोगिन्यै । गोसवासक्तहृदयायै । गोशृङ्गध्वानमोदिन्यै । घोराघनकृपा-युक्ताघननीलाम्बरान्वितायै । (घोरायै । घनकृपायुक्तायै । घननीलाम्बरान्वितायै ।) घृतकाठिन्यहृदे । घण्टामणिमाला-प्रसाधनायै नमः । ७००

ओं घूर्णिताक्ष्यै नमः । घृणासिन्धवे । घृणिविद्यायै । घटेश्वर्यै । घटवाद्यप्रियायै । घोरकौणपघ्न्यै । घटार्गलायै । घोषत्रस्तान्तकभटायै । घोरसन्तापकृद्धलायै । घोरास्यायै । घोरशूलाग्रप्रोतासुरकलेबरायै । घनाल्युच्छेदशिखरगोपुरानेक-

मन्दिरायै। घनस्फटिकसंक्लृप्तसालान्तरकदम्बकायै। घनश्यामायै। घटोद्भूततापसात्मार्थदेवतायै । घटिकायै । घटिकामुख्य षट्पारायणमोदिन्यै । घोरकृत्यायै । घोरवाद्यायै । घोराघौघविनाशिन्यै नमः। ७२०

घनसारानुलिप्तांग्यै नमः । घोणोद्धृतवसुन्धरायै । घण्टाकर्णादिविनुतायै । घनज्योतिर्लतानिभायै । ङान्तार्णाद्य-मनुप्रीतायै । ङाकारायै । ङींपरायणायै । ङीङ्कारिमञ्जु मञ्जीरचरणायै। ङांकिताङ्गुल्यै। चण्डिकायै। चण्डकोदण्डायै। चण्डघ्न्यै । चण्डभैरव्यै । चतुर्वक्त्रायै । चक्रहस्तायै । चक्रपाणिसमर्चितायै । चराचरजगद्धात्र्यै । चन्द्रिकाधवल-स्मितायै। चण्डमार्ताण्डधिक्कारभैरव्यै । चक्रनायिकायै नमः । ७४०

ओं चक्रवर्तिसमाराध्यायै नमः । चक्रनेमिरवोत्सुकायै । चण्डलास्यपरामोदायै । चण्डवादपटीयस्यै । चतुरायै । चतुराम्नायशिरोलक्षितरूपिण्यै । चापिन्यै । चापमुक्तेषुच्छन्न-दिक्प्रान्तपन्नगायै । चाटुवादप्रियायै । चामीकरपर्वतवासिन्यै । चिन्त्यायै । चिरन्तन्यै । चित्रायै । चित्रानिर्जितदानवायै । चित्रलेखायै । चिदाकाशमध्यगायै । चिन्तितार्थदायै । चैतन्यरूपायै। चिच्छक्तये। चिदम्बरविहारिण्यै नमः। ७६०

ओं चित्रभानुमुख्यै नमः। चित्रसेनायै। चित्राङ्गदेष्टदायै। चम्पकाशोकस्रग्बद्ध चिकुरायै । चरुभक्षिण्यै । चमरीमृग-योद्युक्तायै । चिरञ्जीवित्वदायिन्यै । चर्माम्बरधरायै । चण्डक्रोधहुङ्कारभीकरायै। चोरघ्न्यै। चौर्यविमुखायै। चतुर्दशमनु-प्रियायै। चतुरङ्गबलोपेतायै। चराचरविनोदिन्यै। चतुःषष्टिकला-

रूपायै । चतुःषष्ट्यर्चनोत्सुकायै । चन्द्रमण्डलमध्यस्थायै । चतुर्वर्गफलप्रदायै । छन्दोरूपायै । छन्दगत्यै नमः । ७८०

ओं छन्दःशीर्षविहारिण्यै नमः । छिन्नमस्ताम्बिकायै । छिन्नशीर्षशत्रुच्छलान्तकायै । छायापतिसमाराध्यायै । छायाम्बायै । छत्रसेवितायै । छत्रचामरभृल्लक्ष्मीवागीन्द्राणीरतीवृतायै । छेदितासुरजिह्वाग्रायै । छत्रीकृतयशस्विन्यै । छर्दिताण्डावल्यै । छादिताकारायै । छिन्नसंशयायै । छन्दःशास्त्रमय्यै । छन्दोलक्ष्यायै । छेदविवर्जितायै । छद्महृदे । छविसन्दीप्तसूर्यचन्द्राग्नितारकायै । ज़नन्यै । जगदानन्ददात्र्यै । जह्नुसमर्चितायै नमः । ८००

ओं जपाकुसुमसङ्काशायै नमः । जन्मादिध्वंसकारणायै । जगन्मात्रे । जगत्साक्षिण्यै । जगद्योनये । जगद्गुरवे । जगन्मायायै । जगद्वृन्दवन्दितायै । जयिन्यै । जयायै । जृम्भिण्यै । जम्भभित्पूज्यायै । जाग्रदादित्रयातिगायै । जनजाड्यप्रतापघ्न्यै । जितासुरमहाव्रजायै । जीवनार्थिद्विजव्रातत्राणनाबद्ध कङ्कणायै । जपयज्ञपराधीनहृदयायै । जगदीश्वर्यै । ज्वालामालिनिकायै । ज्वालामुख्यै नमः । ८२०

ओं जैमिनिसंस्तुतायै नमः । जीवब्रह्मैकताकांक्षिजनताकीर्णपाशभुवे । जालन्धपूर्णकामोड्याणचतुष्पीठरूपिण्यै । ज्वलदग्निधरायै । ज्वालाप्रोच्चकेश्यै । ज्वरार्तिहृते । जपमालावराभीतिमुद्रापुस्तकधारिण्यै । झलंझलकृतस्वर्णमञ्जीरायै । झषलोचनायै । झषकेतुसमाराध्यायै । झषमांसान्नभक्षिण्यै । झषकुण्डलिन्यै। झल्लरीवाद्यमुदिताननायै । झञ्झानिलातिगमनायै । झषराण्णीतसागरायै । झषोपद्रवकृद्धन्त्र्यै । झ्म्र्यूं मन्त्रार्णाधिदेवतायै । ज्ञानमूर्तये । ज्ञानिगम्यायै । ज्ञानदायै नमः । ८४०

ज्ञातिवर्जितायै नमः । ज्ञेयायै । ज्ञेयादिरहितायै । ज्ञात्र्यै । ज्ञातिस्वरूपिण्यै । ज्ञानमुद्राधरायै । ज्ञानिहृत्पद्मकुहरस्थितायै । टङ्कपुष्पालि-स्रङ्मञ्जुकन्धरायै । टङ्कितचलायै । टङ्कवेत्रादि-मानेकशस्त्रभृद्दोर्लतावल्यै । ठकारनिभवक्षोजद्वयाधोवृत्तभा-सुरायै । ठकारान्वितजान्वग्रजितकोरकिताम्बुजायै । डाकिन्यै । डामरीतन्त्ररूपायै । डाडिमपाटलायै । डम्भघ्न्यै । डम्बरा-डम्बरोन्मुख्यै । डमरुप्रियायै । डिम्भदानचणायै । डोलामुदितायै नमः । ८६०

ओं ढुण्डिपूजितायै नमः । ढक्कानिनादसन्तुष्ट-शिखिनृत्तसमुत्सुकायै । णकारपञ्जरशुक्यै । णकारोद्यान-कोकिलायै । तत्वातीतायै । तपोलक्ष्यायै । तप्तकाञ्चनसन्निभायै । तर्जन्यङ्गुष्ठसंयोगज्ञातब्रह्ममुनीश्वरायै । तर्जितानेकदनुजायै । तक्षक्यै । तटिदालिभायै । ताम्रचूडध्वजोत्सङ्गायै । तापत्रयविनाशिन्यै । तन्त्र्यै । तत्त्वमसिवाक्यविषयायै । तरुणीवृतायै । त्रयीमय्यै । त्रयीवेद्यायै । त्रय्यन्तोद्गीतवैभवायै । त्रयीद्विड्रसनारक्तपानलोलासिधारिण्यै नमः । ८८०

ओं ताराम्बायै नमः । तारकायै । तारापूज्यायै । ताण्डवलोलुपायै । त्रिपुरायै । त्रिपुरध्वंसिप्रियायै । त्रिपुरसुन्दर्यै । त्रिस्थायै । त्रिमूर्तिसहजशक्त्यै । त्रिपुरभैरव्यै । त्रिकोणस्थायै । त्रिकालज्ञायै । त्रिकूटायै । त्रिपुरेश्वर्यै । त्रिचत्वारिंशद-श्राङ्कचक्रान्तर्बिन्दुसंस्थितायै । त्रितारायै । तुम्बुरूद्गीतायै । तार्क्ष्याकारायै । चिदग्निजायै । तिलोत्तमादिदेवस्त्रीशारीरोत्सुक-मानसायै नमः । ९००

ओं तिल्वद्रुसङ्कुलाभोगकान्तारान्तरवासिन्यै नमः । थां थीं करमृदङ्गादिभृद्विष्णुमुखसेवितायै । स्थिरायै । स्थैर्यप्रदायै ।

स्थाणवे । स्थावरादिमधूर्वहायै । थां थीं तत्तत्तथिन्तोकृत्ता-लध्वनिसभाङ्गणायै । दक्षायै । दाक्षायण्यै । दक्षप्रजापति-मखान्तक्यै । दक्षिणाचाररसिकायै । दयासंपूर्णमानसायै । दारुकान्तकर्यै । दारुकारण्यमुनिमोहिन्यै । दुष्टदूरायै । दुराचारशमन्यै । द्यूतवेदिन्यै । दीर्घदंष्ट्राननायै । दीर्घरसना-गीर्णदानवायै । दीक्षितायै नमः । ९२०

ओं दीक्षिताराध्यायै नमः । दीनसंरक्षणोद्यतायै । द्विजावगूरणस्वान्तपिशितामोदिताण्डजायै । दुःखाब्धिबडवायै । दुर्गायै । दुम्बीजायै । दुरितापहायै । दारिद्र्योन्मूलिन्यै । दानशीलायै । दोषविवर्जितायै । धराधरात्मजायै । धर्मरूपायै । धरण्यै । धूर्वहायै । (धरणिधूर्वहायै) धनदायै । धनदाराध्यायै । धनदाप्तकुटुम्बिन्यै । धात्र्यै । धातृशिरश्छेत्र्यै । धीध्येयायै नमः । ९४०

ओं ध्रुवपूजितायै नमः । धूमावत्यै । धूम्रनेत्रगर्वसंहारिण्यै । धृत्यै । नरनारायणस्तुत्यायै । नलिनायतलोचनायै । नरास्थि-स्रग्धरायै । नार्यै । नरप्रेतोपरिस्थितायै । नारायण्यै । नन्दिविद्यायै। नारदोद्गीतवैभवायै । नादब्रह्ममय्यै । नामरूपहीनायै । नताननायै। नादचामुण्डिकायै । नानारूपभृते । नास्ति-कान्तक्यै । नृसिंहदर्पशमन्यै । नरेन्द्रगणवन्दितायै नमः । ९६०

ओं नखोत्पन्नदशाकारमाधवायै नमः । नकुलीश्वर्यै । निर्गुणायै । नित्यसन्तुष्टायै । नित्याषोडशिकावृतायै । नवाक्षर्यै । नाममन्त्रजपप्रीतायै । नटेश्वर्यै । निगमागमसंवेद्यायै । नेत्र्यै नीतिविशारदायै । नौकारूढासमुत्तीर्णभवांभोधिनिजा-श्रितायै । परमायै । परमज्योतिषे । परब्रह्ममय्यै । परायै । परापरमय्यै । पाशबाणाङ्कुशधनुर्धरायै । पापघ्न्यै । पाशरहितायै नमः । ९८०

ओं पार्वत्यै नमः। परमेश्वर्यै। प्रत्यङ्गिरसे। पानपात्रधरायै। पीनोन्नतस्तन्यै। पुण्यायै। पुलिन्दिनीपूज्यायै। प्राज्ञायै। प्रज्ञानरूपिण्यै। पराप्रासादमन्त्रार्थायै। पतञ्जलिसमर्चितायै। पुरातनायै। परायै शक्त्यै। पञ्चवर्णस्वरूपिण्यै। फलदायै। फल्गुनप्रीतायै। फुल्लाननसरोरुहायै। फडर्णध्वस्तपापौघदासायै। फणिवरेडितायै। फुल्लोत्तमाङ्गसाहस्रदलपङ्कजभासुरायै। फणिरत्नासनासीन कामेशोत्सङ्गवासिन्यै। ब्रह्मचामुण्डिकायै नमः। १००२

तिल्लवनस्थायै विद्महे ब्रह्मपत्न्यै च धीमहि।
तन्नो ब्रह्मचामुण्डिका प्रचोदयात्॥

उत्तरभद्रकालिकाध्यानम्—

सकलभुवनमान्यां तैलसंसिक्तगात्रीं
सकलदुरितनाशां शृङ्खलाबद्धपादाम्।
सकलधवलवस्त्रां उत्तरां भद्रकालीं
सकलफलविधात्रीं संभजे कुङ्कुमाढ्याम्॥

कुङ्कुमाक्तायै विद्महे चित्पुरोत्तरदिक्स्थायै धीमहि।

तन्न उत्तरभद्रकाली प्रचोदयात्।

—*—

# अघोरमूर्तिसहस्रनामावलिः

(श्वेतारण्य (திருவெண்காடு) क्षेत्रे जलन्धरासुर-सुतमरुत्त्वासुरवधार्थमाविर्भूतः शिवोऽयं चतुःषष्टिमूर्तिष्वन्यतमः । अघोरवीरभद्रोऽन्या मूर्तिः दक्षाध्वरध्वंसाय आविर्भूता ।)

श्रीमहागणपतये नमः

ओं अघोरमूर्तिस्वरूपिणे नमः । कामिकागमपूजिताय । तुर्यचैतन्याय । सर्वचैतन्याय (मेखलाय) । महाकायाय । अग्रगण्याय । अष्टभुजाय । ब्रह्मचारिणे । कूटस्थचैतन्याय । ब्रह्मरूपाय । ब्रह्मविदे । ब्रह्मपूजिताय । ब्रह्मण्याय (बृहदास्याय) । विद्याधरसुपूजिताय । अघघ्नाय । सर्वलोकपूजिताय । सर्वदेवाय । सवदेवपूजिताय । सर्वशत्रुहराय । वेदभावसुपूजिताय नमः । २०

ओं स्थूलसूक्ष्मसुपूजिताय नमः । सर्वज्ञाय । गुणश्रेष्ठकृपानिधये । त्रिकोणमध्यनिलयाय । प्रधानपुरुषाय । अचिन्त्याय । परब्रह्मणे । नक्षत्रमालाभरणाय । तत्पदलक्ष्यार्थाय । विरूपाक्षाय । शूलपाणये । त्रयीमूर्तये । सोमसूर्याग्निलोचनाय । वीरभद्राय । भुजङ्गभूषणाय । अष्टमूर्तये । पापविमोचनाय । सहस्राक्षाय । अहंपदलक्ष्यार्थाय । अखण्डानन्दचिद्रूपाय नमः । ४०

ओं मरुत्वशिरोन्यस्तपादाय नमः । कालचक्रप्रवर्तकाय । कालकालाय । कृष्णपिङ्गलाय । करि(गज)चर्माम्बरधराय । कपालिने । कपालमालाभरणाय । कङ्कालाय । क्रूर(कृश)रूपाय । कलिनाशनाय । कपटवर्जिताय । कलानाथशेखराय । कन्दर्पकोटिसदृशाय । कमलासनाय । कदम्बकुसुमप्रियाय ।

संहारताण्डवाय। ब्रह्माण्डकरण्डविस्फोटनाय। प्रलयताण्डवाय। नन्दिनाट्यप्रियाय। अतीन्द्रियाय। नमः। ६०

ओं विकाररहिताय नमः। शूलिने । वृषभध्वजाय । व्यालालङ्कृताय । व्याप्यसाक्षिणे । विशारदाय । विद्याधराय । वेदवेद्याय । अनन्तका(क)कारणाय । वैश्वानरविलोचनाय । स्थूलसूक्ष्मविवर्जिताय। जन्मजरामृत्युनिवारणाय। शुभंकराय। ऊर्ध्वकेशाय। सुभानवे (सुभ्रुवे)। भर्गाय। सत्यपा(वा)दिने। धनाधिपाय। शुद्धचैतन्याय। गह्वरेष्ठाय नमः। ८०

ओं परमात्मने नमः। परात्पराय। नरसिंहाय। दिव्याय। प्रमाणज्ञाय । ब्रह्मण्याय । ब्राह्मणात्मकाय । कृष्णाय । सच्चिदानन्दाय। ब्रह्मविद्याप्रदायकाय। बृहस्पतये। सद्योजाताय। सामसंस्तुताय। अघोराय। आनन्दवपुषे। सर्वविद्यानामीश्वराय। सर्वशास्त्रसंमताय । ईश्वराणामधीश्वराय । जगत्सृष्टिस्थितिलय-कारणाय। स(स्र)मरप्रियाय नमः। १००

ओं मोहकाय नमः । सहस्राक्षाय । सहस्रांघ्रये । मानसैकपरायणाय । सहस्रवदनाम्बुजाय । उदासीनाय । मौनगम्याय। यजनप्रियाय । असंस्कृताय । व्यालप्रियाय । भयङ्कराय। निरञ्जनाय । निर्विकाराय । निर्विकल्पाय । गुणातीताय। गुहप्रियाय । कालान्तकवपुर्धराय । दुष्टदूराय । जगदधिष्ठानाय। किंकिणीमालालङ्काराय नमः। १२०

ओं दुराचारशमनाय नमः । सर्वसाक्षिणे । सर्वदारिद्यक्लेशनाशनाय । अयो(धो)दंष्ट्रिणे । दक्षाध्वरहराय । दक्षाय । सनकादिमुनिस्तुताय । पञ्चप्राणाधिपतये । परश्वेतरसिकाय। विघ्नहन्त्रे । गूढाय । सत्यसंकल्पाय ।

सुखावहाय। तत्त्वबोधकाय । तत्त्वेशाय । तत्त्वभावाय । तपोनिलयाय । अक्षराय । भेदत्रयरहिताय । मणिभद्रार्चिताय नमः । १४०

ओं मान्याय नमः । मान्तिकाय । महते । यज्ञफलप्रदाय । यज्ञमूर्तये । सिद्धेशाय । सिद्धवैभवाय । रविमण्डलमध्यस्थाय । श्रुतिगम्याय । वह्निमण्डलमध्यस्थाय । वरुणेश्वराय । सोममण्डलमध्यस्थाय । दक्षिणाग्निलोचनाय । गार्हपत्याय । गायत्रीवल्लभाय । वटुकाय । ऊर्ध्वरितसे । प्रौढनर्तनलंपटाय । सर्वप्रमाणगोचराय। महामायाय नमः । १६०

ओं महाग्रासाय नमः । महावीर्याय । महाभुजाय । महानन्दाय । महास्कन्दाय । महेन्द्राय । भ्रान्तिज्ञान-नाशका(ना)य। महासेनगुरवे। अतीन्द्रियगम्याय। दीर्घबाहवे। मनोवाचामगोचराय। कामभिन्नाय। ज्ञानलिङ्गाय। ज्ञानगम्याय। श्रुतिभिः स्तुतवैभवाय । दिशांपतये । नामरूपविवर्जिताय । सर्वेन्द्रियगोचराय। रथन्तराय। सर्वोपनिषदाश्रयाय नमः । १८०

अखण्डामण्डलमण्डिताय नमः । ध्यानगम्याय । अन्तर्यामिणे। कूटस्थाय। कूर्मपीठस्थाय। सर्वेन्द्रियागोचराय। खड्गायुधाय। वौषट्काराय। हुं फट्कराय। मायायज्ञविमोचकाय। कलापूर्णाय । सुरासुरनमस्कृताय । निष्कलाय । सुरारिकुल-नाशनाय। ब्रह्मविद्यागुरवे। ईशानगुरवे। प्रधानपुरुषाय। कर्मणे। पुण्यरूपाय। कार्याय नमः । २००

ओं कारणाय नमः । अधिष्ठानाय । अनादिनिधनाय । सदाशिवाय । सर्वसाक्षिणे । नियन्त्रे । नियमाय । युगामयाय । वाग्मिने । लोकगुरवे । परब्रह्मणे । वेदात्मने । शान्ताय ।

ब्रह्मचैतन्याय । चतुःषष्टिकलागुरवे । मन्त्रात्मने । मन्त्रमूर्तये । मन्त्रतन्त्रप्रवर्तकाय। मन्त्रिणे। महाशूलधराय नमः । २२०

ओं जगत्पुषे नमः । (द्रपुषे) नमः । जगत्कर्त्रे। जगन्मूर्तये। तत्पदलक्ष्यार्थाय । सच्चिदानन्दाय । शिवज्ञानप्रदायकाय । अहङ्काराय । असुरान्तःपुराक्रान्तकाय । जयभेरिनिनादिताय । स्फुटाट्टहाससंक्षिप्तमरुत्वासुरमारकाय । महाक्रोधाय । महाबलपराक्रमाय । महासिद्धये । निष्कलङ्काय । महानुभवाय । महाधनुषे । महाबाणाय । महाखड्गाय । दुर्गुणद्वेषिणे । कमलासनपूजिताय नमः । २४०

ओं कलिकल्मषनाशनाय नमः । नागसूत्रविलसच्चिता-मकुटिका(ता)य । रक्तपीताम्बरधराय । रक्तपुष्पशोभिताय । रक्तचन्दनलेपिताय । स्वाहाकाराय । स्वधाकाराय । आहुतये । हवनप्रियाय। हव्याय। होत्रे। अष्टमूर्तये। कलाकाष्ठाक्षणात्मकाय। मुहूर्ताय। घटिकारूपाय। यामाय। यामात्मकाय। पूर्वाह्णरूपाय। मध्याह्नरूपाय। सायाह्नरूपाय नमः । २६०

ओं अपराह्णाय नमः । अतिथिप्राणाय। प्रजागराय। वेद्याय। वेदयित्रे । वैद्येशाय । वेदभृते । सत्यसन्धाय । विदुषे । विद्वज्जनप्रियाय । विश्वगोप्त्रे । विश्वतोमुखाय । वीरेशाय । महाशूरभयङ्कराय । एकवीराय । शाम्भवाय । अतिगम्भीराय । गम्भीरहृदयाय। चक्रपाणिपूजिताय। सर्वलोकाभिरक्षकाय नमः। २८०

ओं अकल्मषाय नमः । कलिकल्मषनाशनाय। कल्मषघ्नाय। कामक्रोधविवर्जिताय । सत्वमूर्तये । रजोमूर्तये । तमोमूर्तये । प्रकाशरूपाय । प्रकाशनियामकाय । अनलाय । कनकाचलकार्मुकाय। विद्रुमाकृतये। विजयाक्रान्ताय। विघातिने।

अविनीतजनध्वंसिने। अविनीतजननियन्त्रे । स्वयंभुवे । आम्नाय। अग्राह्यरूपाय। सुग्राह्याय नमः । ३००

ओं लोकस्मिता(सिता)क्षाय । अरिमर्दनाय । त्रिधाम्ने । त्रिलोकनिलयाय । शर्मणे । विश्वरेतसे । आदित्याय । सर्वदर्शका(ना)य । सर्वयोगविनिःसृताय । वसवे । वसुमनसे । देवाय । वसुरेतसे । वसुप्रदाय । सर्वदर्शनाय । वृषाकृतये । महारुद्राय। वृषारूढाय। वृषकर्मणे। रुद्रात्मने नमः । ३२०

ओं रुद्रसंभवाय नमः । अनेकमूर्तये । अनेकबाहवे । सर्ववेदान्तगोचराय । पुराणपुरुषाय । कृष्णकेशाय । भोत्रेयाय । वीरसेविताय। मोहगीतप्रियाय। भुजङ्गभूषणाय। वरवीरविघ्नाय। युद्धहर्षणाय । सन्मार्गदर्शकाय । मार्गदायकाय । मार्गपालकाय । दैत्यमर्दनाय। मरुते। सोमसुताय। सोमभृते। सोमभूषणाय नमः । ३४०

ओं सोमप्रियाय नमः । सर्पहाराय । सर्पसायकाय । अमृत्यवे। चमरारातिमृत्यवे । मृत्युञ्जयरूपाय । मन्दारकुसुमप्रियाय । सुराराध्याय । सुमुखाय । वृषपर्वणे । वृषोदराय । त्रिशूलधारकाय । सिद्धपूजिताय । अमृतांशवे । अमृताय। अमृतप्रभवे। औषधाय। लम्बोष्ठाय। प्रकाशरूपाय। भवमोचनाय नमः । ३६०

ओं भास्करानुग्रहाय नमः । भानुवारप्रियाय । भयङ्करासनाय। चतुर्युगविधात्रे । युगधर्मप्रवर्तकाय । अधर्मशत्रवे। मिथुनाधिपपूजिताय । योगरूपाय । योगज्ञाय । योगपारगाय। सप्तगुरुमुखाय। महापुरुषविक्रमाय। युगान्तकृते। युगाद्याय । दृश्यादृश्यस्वरूपाय । सहस्रजिते। सहस्रलोचनाय।

सहस्रलक्षिताय। सहस्रायुधमण्डिताय। सहस्रद्विजकुन्त(न्द)लाय नमः। ३८०

ओं अनन्तरसंहर्त्रे नमः । सुप्रतिष्ठाय । सुखकराय । अक्रोधाय । क्रोधहन्त्रे । शत्रुक्रोधविमर्दनाय । विश्वमूर्तये । विश्वबाहवे । विश्वधृते । विश्वतोमुखाय । विश्वेशाय । विश्वसंस्थापनाय। विश्वमात्रे। विश्वरूपदर्शनाय। विश्वभूताय। दिव्यभूमिमण्डिताय । अपांनिधये । अन्नकर्त्रे । अन्नौषधाय । विनयोज्ज्वलाय नमः। ४००

ओं अम्भोजमौलये नमः । उज्जृम्भाय । प्राणजीवाय । प्राणप्रदायकाय । धैर्यनिलयाय । धनाध्यक्षाय । पद्मासनाय । पद्माङ्कये । पद्मसंस्थिताय । ओङ्कारात्मने । ओङ्कार्यात्मने । कमलासनस्थिताय । कर्मवर्धनाय । त्रिशरीराय । शरीरत्रयनायकाय। शरीरपराक्रमाय । जाग्रत्प्रपञ्चाधिपतये । सप्तलोकाभिमानवते । सुषुप्त्यवस्थाभिमानवते । सर्वसाक्षिणे नमः। ४२०

ओं वीरायुधाय नमः। वीरघोषाय। वीरायुधकरोज्ज्वलाय। सर्वलक्षणसंपन्नाय। शरभाय। भीमविक्रमाय। हेतुहेतुमदाश्रयाय। अक्षोभ्याय। रक्षोदा(मा)रणविक्रमाय। गुणश्रेष्ठाय। निरुद्योगाय। महायोगिने । महाप्राणाय । महेश्वरमनोहराय । अमृतहराय । अमृतभाषिणे। अक्षोभ्याय। क्षोभकर्त्रे। क्षेमिणे। क्षेमवते नमः। ४४०

ओं क्षेमवर्धका(ना)य नमः । धर्माधर्मविदां श्रेष्ठाय । वरधीराय। सर्वदैत्यभयङ्कराय। शत्रुघ्नाय। संसारामयभेषजाय। वीरासनानन्दकारिणे । वरप्रदाय । दक्षपादप्रलम्बिताय ।

अहङ्कारिणे । अनन्ताय । आढ्याय । आर्तसंरक्षणाय । उरुपराक्रमाय। उग्रलोचनाय । उन्मत्ताय । विद्यारूपिणे । महायोगिने। शुद्धज्ञानिने। पिनाकधृते नमः । ४६०

ओं रक्तालङ्कारसर्वाङ्गाय नमः । रक्तमालाजटाधराय । गङ्गाधराय । अचलवासिने । अप्रमेयाय । भक्तवत्सलाय । ब्रह्मरूपिणे। जगद्व्यापिने। पुरान्तकाय। पीताम्बरविभूषणाय। मोक्षदायिने । दैत्याधीशाय । जगत्पतये । कृष्णतनवे । गणाधिपाय। सर्वदेवैरलङ्कृताय । यज्ञनाथाय । क्रतुध्वंसिने । यज्ञभोक्त्रे। यज्ञान्तकाय नमः । ४८०

ओं भक्तानुग्रहमूर्तये नमः । भक्तसेव्याय । नागराजैर-लङ्कृताय। शान्तरूपिणे। महारूपिणे। सर्वलोक-विभूषणाय। मुनिसेव्याय । सुरोत्तमाय । भगवते । अग्निचन्द्रार्कलोचनाय । जगत्सृष्टये। जगद्भोक्त्रे। जगद्गोप्त्रे। जगद्ध्वंसिने। महादेवाय। सिद्धसंघसमर्चिताय । व्योममूर्तये । भक्तानामिष्टकाम्यार्थ फलप्रदाय। परब्रह्ममूर्तये। अनामयाय नमः । ५००

ओं वेदवेदान्ततत्त्वार्थाय नमः । चतुःषष्टिकलानिधये । भवरोगभयध्वंसिने । ब्रह्मचारिणे । राजयक्ष्मादिरोगाणां विनिहन्त्रे। पुरुषोत्तमाय। निरालम्बाय। पूर्वजाय। धर्मिष्ठाय। गायत्रीप्रियाय । अन्त्यकालाधिपाय । चतुःषष्टिकलानिधये । भवरोगभयध्वंसिने । ब्रह्मचारिणे । निर्मलाय । निर्ममाय । शरण्याय। वरेण्याय। महाबलपराक्रमाय। मुनिप्रियाय नमः । ५२०

ओं निष्कलङ्काय नमः । कालपाशनिघाताय । प्राण-संरक्षणाय । फालनेत्राय । नन्दिकेश्वरप्रियाय । शिखाज्वाला-

विहिताय । सर्पकुण्डलधारिणे । करुणारससिन्धवे । अन्तकरक्षकाय । अखिलागमवेद्याय । विश्वरूपप्रियाय । वदनीयाय । ईशाय । सुप्रसन्नाय । सुशूलाय । सुवर्चसे । वसुप्रदाय । वसुन्धराय । उग्ररूपाय । हृषीकेशाय नमः । ५४०

ओं निर्जराय नमः । रुग्घन्त्रे । उज्ज्वलतेजसे । आशरण्याय । जन्ममृत्युजराव्याधिविवर्जिताय । अन्तर्बहिः प्रकाशाय । आत्मरूपिणे । आदिमध्यान्तरहिताय । सदाराध्याय । साधुपूजिताय । जितेन्द्रियाय । शिष्टपालकाय । अष्टमूर्तिप्रियाय । अष्टभुजाय । जयफलप्रदाय । भवबन्धविमोचनाय । भुवनपालकाय । सकलार्तिहराय । सनकादिमुनिस्तुत्याय । महाशूराय नमः । ५६०

ओं महारौद्राय नमः । महाभद्राय । महाक्रूराय । तापपापविवर्जिताय । वीरभद्रविलयाय । क्षेत्रप्रियाय । वीतरागाय । वीतभयाय । विज्वराय । विश्वकारणाय । नानाभयनिकृन्तनाय । कमनीयाय । दयासाराय । भयघ्नाय । भव्यफलदाय । सद्गुणाध्यक्षाय । सर्वकष्टनिवारणाय । दुःखभञ्जनाय । दुःस्वप्ननाशनाय । दुष्टगर्वविमोचनाय नमः । ५८०

ओं शस्त्रविद्याविशारदाय नमः । याम्यदिङ्मुखाय । सकलवश्याय । दृढव्रताय । दृढफलाय । श्रुतिजालप्रबोधाय । सत्यवत्सलाय । श्रेयसांपतये । वेदतत्त्वज्ञाय । त्रिवर्गफलदाय । बन्धविमोचकाय । सर्वरोगप्रशमनाय । शिखिवर्णाय । अध्वरासक्ताय । वीरश्रेष्ठाय । चित्तशुद्धिकराय । सुराराध्याय । धन्याय । अधिपराय । धिषणाय नमः । ६००

ओं देवपूजिताय नमः । धनुर्धराय । हरये । भुवनाध्यक्षाय । भुक्तिमुक्तिफलप्रदाय । चारुशीलाय । चारुरूपाय । निधये ।

सर्वलक्षणसंपन्नाय । सर्वाविगुणवर्जिताय । मनस्विने । मानदायकाय । मायातीताय । महाशयाय । महाबलपराक्रमाय । कम्बुग्रीवाय । कलाधराय । करुणारसंसपूर्णाय । चिन्तितार्थ-प्रदायकाय । महाट्टहासाय नमः । ६२०

ओं महामतये नमः । भवपाशविमोचकाय । सन्तानफलदायकाय । सर्वेश्वरपददाय । सुखासनोपविष्टाय । घनानन्दाय । घनरूपाय । घनसारविलोचनाय । महनीय-गुणात्मने । नीलवर्णाय । विधिरूपाय । वज्रदेहाय । कूर्माङ्गाय । अविद्यामूलनाशनाय । कष्टौघनाशनाय । श्रोत्रगम्याय । पशूनां पतये । काठिन्यमानसाय । धीराय । दिव्यदेहाय नमः । ६४०

ओं दैत्यनाशकराय नमः । क्रूरभञ्जनाय । भवभीतिहराय । नीलजीमूतसंकाशाय । खड्गखेटकधारिणे । मेघवर्णाय । तीक्ष्णदंष्ट्रकाय । कठिनाङ्गाय । कृष्णनागकुण्डलाय । तमोरूपाय । श्यामात्मने । नीललोहिताय । महासौख्यप्रदाय । रक्तवर्णाय । पापकण्टकाय । क्रोधनिधये । खेटबाणधराय । घण्टाधारिणे । वेतालधारिणे । कपालहस्ताय नमः । ६६०

ओं डमरुकहस्ताय नमः । नागभूषचतुर्दशाय । वृश्चिकाभरणाय । अन्तर्वेदिने । बृहदीश्वराय । उत्पातरूपधराय । कालाग्निनिभाय । सर्वशत्रुनाशनाय । चैतन्याय । वीररुद्राय । महाकोटिस्वरूपिणे । नागयज्ञोपवीताय । सर्वसिद्धिकराय । भूलोकाय । यौवनाय । भूमरूपाय । योगपट्टधराय । बद्धपद्मासनाय । करालभूतनिलयाय । भूतमालाधारिणे नमः । ६८०

ओं भेतालसुप्रीताय नमः । आवृतप्रमथाय । भूताय । हुङ्कारभूताय । कालकालात्मने । जगन्नाथार्चिताय ।

कनकाभरणभूषिताय । कह्लारमालिने । कुसुमप्रियाय । मन्दारकुसुमार्चिताय । चाम्पेयकुसुमाय । रक्तसिंहासनाय । राजराजार्चिताय । रम्याय । रक्षणचतुराय । नटननायकाय । कन्दर्पनटनाय । शम्भवे । वीरखड्गविलयनाय । सर्वसौभाग्यवर्धनाय नमः । ७००

ओं कृष्णगन्धानुलेपानाय नमः । देवतीर्थप्रियाय । दिव्याम्बुजाय । दिव्यगन्धानुलेपनाय । देवसिद्धगन्धर्वसेविताय । आनन्दरूपिणे । सर्वनिषेविताय । वेदान्तविमलाय । अष्टविद्यापारगाय । गुरुश्रेष्ठाय । सत्यज्ञानमयाय । निर्मलाय । निरहङ्कृतये । सुशान्ताय । संहारवटवे । कलङ्करहिताय । इष्टकाम्यफलप्रदाय । त्रिणेत्राय । कम्बुकण्ठाय । महाप्रभवे नमः । ७२०

ओं सदानन्दाय नमः । सदा ध्येयाय । त्रिजगद्गुरवे । तृप्ताय । विपुलांसाय । विशारदाय । विश्वगोप्त्रे । विभावसवे । सदापूज्याय । सदास्तोतव्याय । ईशरूपाय । ईशानाय । जगदानन्दकारकाय । मरुत्वासुरनाशकाय । कालान्तकाय । कामरहिताय । त्रिपुरहारिणे । मखध्वंसिने । महायोगिने । मत्तगर्वविनाशनाय नमः । ७४०

ओं ज्ञानदाय नमः । मोक्षदायिने । दुष्टदूराय । दिवाकराय । अष्टमूर्तिस्वरूपिणे । अनन्ताय । प्रभामण्डलमध्यगाय । मीमांसादायकाय । मङ्गलाङ्गाय । महातनवे । महासूक्ष्माय । सत्यमूर्तिस्वरूपिणे । सनातनाय । अनादिनिधनाय । वासुदेवाय । तक्षकाय । कार्कोटकाय । महापद्माय । पद्मरागाय । शङ्कराय नमः । ७६०

ओं शङ्खपालाय नमः । गुलिकाय । सर्पनायकाय । बहुपुष्पार्चिताय । दक्षाय । अक्षराय । पुण्यमूर्तये । धनप्रदायकाय । शुद्धदेहाय । शोकहारिणे । लाभदायिने । रम्यपूजिताय । फणामण्डलमण्डिताय । अग्निनेत्राय । अचञ्चलाय । अपस्मारनाशकाय । भूतनाथाय । भूतात्मने । भूतभावनाय । क्षेत्रज्ञाय नमः । ७८०

ओं क्षेत्रपालाय नमः । क्षेत्रदाय । कपर्दिने । सिद्धदेवाय । त्रिसन्धिनिलयाय । सिद्धसेविताय । कलात्मने । शिवाय । काष्ठायै । बहुनेत्राय । रक्तपालाय । खर्वाय । स्मरान्तकाय । विरागिणे । पावनाय । कालकालाय । प्रतिभानवे । धनपतये । धनदाय । योगदाय नमः । ८००

ओं ज्वलन्नेत्राय नमः । टङ्काय । त्रिशिखाय । कान्ताय । शान्तजनप्रियाय । धूर्धराय । प्रभवे । पशुपतये । परिपालकाय । वटुकाय । हरिणाय । बान्धवाय । अष्टाधाराय । षडाधाराय । अनीश्वराय । ज्ञानचक्षुषे । तपोमयाय । जिघ्राणाय । भूतराजाय । भूतसंहन्त्रे नमः । ८२०

ओं दैत्यहारिणे नमः । सर्वशक्त्यधिपाय । शुद्धात्मने । परमन्त्रपराक्रमाय । वश्याय । सर्वोपद्रवनाशनाय । वैद्यनाथाय । सर्वदुःखनिवारणाय । भूतघ्ने । भस्माङ्गाय । अनादिभूताय । भीमपराक्रमाय । शक्तिहस्ताय । पापौघनाशकाय । सुरेश्वराय । खेचराय । असिताङ्गभैरवाय । रुद्र(रु)भैरवाय । चण्डभैरवाय । क्रोधभैरवाय नमः । ८४०

ओं उन्मत्तभैरवाय नमः। कपालिभैरवाय। भीषणभैरवाय। संहारभैरवाय। स्वर्णाकर्षणभैरवाय। वश्याकर्षणभैरवाय। बडबानलभैरवाय। शोषणभैरवाय। शुद्धबुद्धाय। अनन्तमूर्तये। तेजःस्वरूपाय। निरामयाय। कान्ताय। निरातङ्काय। निरालम्बाय। आत्मारामाय। विश्वरूपिणे। सर्वरूपाय। कालहन्त्रे। मनस्विने नमः। ८६०

ओं विश्वमात्रे नमः। जगद्धात्रे। जटिलाय। विरागाय। पवित्राय। पापत्रयनाशनाय। नादरूपाय। आराध्याय। साराय। अनन्तमायिने। धर्मिष्ठाय। वरिष्ठाय। वरदाय। परमप्रेममन्त्राय। उग्राय। वीराय। मुक्तिनाथाय। जलन्धरपुत्रघ्नाय। अधर्मशत्रुरूपाय। दुन्दुभिमर्दनाय नमः। ८८०

ओं अजातशत्रवे नमः। ब्रह्मशिरश्छेत्रे। कालकूटविषादिने। जितशत्रवे। गुह्याय। जगत्संहारकाय। एकादशस्वरूपाय। वह्निमूर्तये। तीर्थनाथाय। अघोरभद्राय। अतिक्रूराय। रुद्रकोपसमुद्भूताय। सर्पराजनिवीताय। ज्वलन्नेत्राय। भ्रमिताभरणाय। त्रिशूलायुधधारिणे। शत्रुप्रतापनिधनाय। धनाध्यक्षाय। शशिशेखराय। हरिकेशवपुर्धराय नमः। ९००

ओं जटामकुटधारिणे नमः। दक्षयज्ञविनाशकाय। ऊर्जस्वलाय। नीलशिखण्डिने। नटनप्रियाय। नीलज्वालोज्ज्वलनाय। धन्विनेत्राय। ज्येष्ठाय। मु(म)खघ्नाय। अरिदर्पघ्नाय। आत्मयोनये। कालभक्षकाय। गम्भीराय। कलङ्करहिताय। ज्वलन्नेत्राय। शरभरूपाय। कालकण्ठाय। भूतरूपधृते। परोक्षवरदाय। कलिसंहारकृते नमः। ९२०

ओं आदिभीमाय नमः । गणपालकाय । भोग्याय । भोगदात्रे । धूर्जटाय । खेटधारिणे । विजयात्मने । जयप्रदाय । भीमरूपाय । नीलकण्ठाय । निरामयाय । भुजङ्गभूषणाय । गहनाय । दामभूषणाय । टङ्कहस्ताय । शरचापधराय । प्राणदाय । मृगासनाय । महावश्याय । महासत्यरूपिणे नमः । ९४०

ओं महाक्षामान्तकाय नमः । विशालमूर्तये । मोहकाय । जाड्य(जृम्भ)कारिणे । दिविवासिने । रुद्ररूपाय । सरसाय । दुःस्वप्ननाशनाय । वज्रदंष्ट्राय । वक्रदन्ताय । सुदान्ताय । जटाधराय । सौम्याय । भूतभावनाय । दारिद्र्यनाशनाय । असुरकुलनाशनाय । मारघ्नाय । कैलासवासिने । क्षेमक्षेत्राय । बिन्दूत्तमाय नमः । ९६०

ओं आदिकपालाय नमः । बृहल्लोचनाय । भस्मधृते । वीरभद्राय । विषहराय । ईशानवक्त्राय । कारणमूर्तये । महाभूताय । महाडम्भाय । रुद्राय । उन्मत्ताय । त्रेतासाराय । हुंकारकाय । अचिन्त्याय । ब्रह्मणे । किङ्किणीधृते । घातुकाय । वीणापञ्चमनिःस्वनिने । श्यामनिभाय । अट्टहासाय नमः । ९८०

ओं रक्तवर्णाय नमः। उग्राय । अङ्गधृते । आधाराय । शत्रुमथनाय । वामपादपुरःस्थिताय । पूर्वफल्गुनीनक्षत्रवासिने । असुरयुद्धकोलाहलाय । सूर्यमण्डलमध्यगाय । चन्द्रमण्डल-मध्यगाय । चारुहासाय । तेजः स्वरूपाय । तेजोमूर्तये । भस्मरूपत्रिपुण्ड्राय । भयावहाय । सहस्राक्षाय । सहस्रबाहवे । सहस्रनयनार्चिताय । कुन्दमूलेश्वराय । अघोरमूर्तये नमः । १०००

—*—

ॐ

श्रीगणपतये नमः

गजाननं चन्द्रसमानवर्णं स्वदन्तपाशाङ्कुशलड्डुकानि।
हस्तैर्दधानं कमलासनस्थं विघ्नेश्वरं नौमि सदा प्रसन्नम्॥

## विघ्नेश्वरषोडशमूर्तिनामावलिः

ओं बालगणपतये नमः। तरुणगणपतये। भक्तिगणपतये। वीरगणपतये। शक्तिगणपतये। ब्रह्मगणपतये। पिङ्गलगणपतये। उच्छिष्टगणपतये। विनायकगणपतये। क्षिप्रगणपतये। हेरम्बगणपतये। लक्ष्मीगणपतये। महागणपतये। विघ्नगणपतये। नृत्तगणपतये। ऊर्ध्वगणपतये नमः॥ १६

## विघ्नेश्वराष्टोत्तरशतनामावलिः

ओं गणपतये नमः। अम्बिकासूनवे। विघ्नेशाय। द्विरदाननाय। विनायकाय। शम्भुपुत्राय। स्कन्दपूर्वजाय। एकदन्ताय। शूर्पकर्णाय। हेमाङ्गाय। सर्पभूषणाय। सर्पयज्ञोपवीतिने। विकटाय। सर्पमेखलाय। लम्बोदराय। महाकायाय। बलिने। मूषिकवाहनाय। पाशाङ्कुशाय। कपिलाय नमः। २०

ओं फालचन्द्राय। अङ्कुशप्रभवे। गजकर्णाय। विशालाक्षाय। विघ्नराजाय। सुप्रियाय। गुरवे। कुमारगुरवे। हेरम्बाय। अग्रगण्याय। चतुर्भुजाय। ब्रह्मचारिणे। ब्रह्मरूपाय। ब्रह्मविदे। ब्रह्मपूजिताय। गरुत्मते। वरदाय। अम्बापूजिताय। शम्भुसेविताय। धूमकेतवे नमः। ४०

ओं प्रसन्नास्याय नमः । हरिश्चन्द्रवरप्रदाय । विदुषे । विराजमानाय । विद्याधरसुपूजिताय । अघघ्नाय । मोदकाशिने । सर्वकार्याग्रपूजिताय । चामरश्रवणाय । देवाय । चित्राभरण-भूषिताय । सर्वसिद्धिकराय । सर्वलोकपूज्याय । गणाग्रजाय । द्वैमातुराय । अजिनधराय । सर्वदेवाग्रपूजिताय । मौञ्जीपतये । वक्रतुण्डाय । सर्वदेवमयाय नमः । ६०

ओं अर्यम्णे नमः । सर्वविद्याधिपाय । अध्यात्रे । वेदभाव-सुपूजिताय । स्थूलकण्ठाय । स्थूलभुजाय । स्थूलसूक्ष्मसुपूजिताय । शिवाय । परशुहस्ताय । सर्वज्ञाय । शङ्करप्रियाय । कल्यब्दवरदाय । हस्तिमस्तकाय । रामपूजिताय । भक्तप्रियाय । महारूपाय । दमयन्तीवरप्रदाय । कामाङ्गनाशनाय । विष्णवे । भगीरथसुपूजिताय नमः । ८०

ओं दिव्यरूपधराय नमः । श्रीमते । परमात्मने । महेश्वराय । दिव्यमालाम्बरधराय । यक्षगन्धर्वसंश्रिताय । स्वर्णपर्वतसंकाशाय । गुणश्रेष्ठाय । कृपानिधये । गजरूपाय । भगवते । विजयिने । कृष्णपूजिताय । दिव्यरूपिणे । शक्तिधराय । मातृका-मण्डलार्चिताय । त्रिकोणमध्यनिलयाय । तुन्दिलाय । त्रिलोचनाय । प्रधानपुरुषाय । १००

ओं अचिन्त्याय । परब्रह्मणे नमः । सनातनाय । नक्षत्रमालाभरणाय । भिन्नदन्ताय । रमाप्रियाय । गौरी सुताय । वरदाय नमः । १०८

# अर्धनारीश्वराष्टोत्तरशतनामस्तोत्रम्

वन्दे मङ्गलसिद्धये तममृतानन्दार्धनारीश्वरं
संपृक्तं सततं मुदा गिरिजया शृङ्गारभावोत्सवम्।
श्यामालङ्कृतवामभागरुचिरं संमोहनं शङ्करं
पुंलक्ष्माकलितच्छविप्रविलसत्सव्येतराङ्गं शिवम्॥

अकाराद्यक्षराकारावर्धेन्दुराजशेखरौ।
अनादिमध्यचरमावंशांशिसङ्गतावगौ॥ १

अक्षोभ्यावनघाकारावसमानाधिकावजौ।
अम्बराशावमानाङ्गावनाथाखिलपालनौ॥ २

उमामहेश्वरावुच्चतमावुत्तमभावनौ।
उरगाभरणावुग्रशासनावुत्कटावुभौ॥ ३

उदारावुरुगाम्भीर्यावुक्थ्यलीनावुदर्चिषौ।
उद्गीथसंहितावुन्नावुर्वीभृद्वासतोषणौ॥ ४

मधुवाचौ मनोवेगौ मङ्गलारम्भनन्दनौ।
मलापहारिणौ मन्त्रवश्यौ मर्मविदां वरौ॥ ५

मरुद्वन्द्यौ महाभोगौ मङ्गल्यभूरिवर्धनौ।
मल्लिकादिसुमप्रीतौ मदादिनाशकारणौ॥ ६

श्रीकरौ श्रीपतिप्रीतौ श्रीमन्तौ श्रीफलप्रियौ।
श्रीविद्यावशगौ श्रीदौ श्रीमत्कैलासवासिनौ॥ ७

श्रीगर्भधारिणौ श्रीमद्गुहराजप्रियात्मजौ।
श्रीकालीनन्दनौ श्रीमद्विद्याराज्ञीकलेवरौ॥ ८

श्रीखण्डकुङ्कुमालेपौ श्रीशब्रह्मादिपूजितौ।
श्रीचक्रनिलयौ श्रीमद्रुद्रयज्ञप्रमोदितौ॥ ९

अर्धनारीपुमाकारावर्धाक्षिपालिताखिलौ।
अरण्यावसथावर्कचन्द्रानलविलोचनौ॥ १०

अर्घ्यपाद्यादिपूजेष्टावर्चनीयपदाम्बुजौ।
अरुन्धतीनायकाद्याराधितावर्थसिद्धिदौ॥ ११

धरोधरेन्द्रहेमाद्रिशृङ्गवासौ धनुर्धरौ।
धनेश्वरसखौ धन्यौ धनञ्जयवरप्रदौ॥ १२

धम्मिल्ललग्नजटिलौ धर्मराड्दण्डिताहृतौ।
धर्मलक्षणनिष्पत्तिक्रियानुग्रहशालिनौ॥ १३

नास्तिक्यनाशकौ नाव्यौ नामरूपविवर्जितौ।
नालम्बीवल्लकीलोलौ नायिकानायकोत्तमौ॥ १४

नारदादिस्तुतिप्रीतौ नाट्यशास्त्रप्रवर्तकौ।
नाकनाथादिसंराध्यौ नाट्यलास्यगताण्डवौ॥ १५

रीङ्कारभ्रमराह्लादौ रीङ्कारात्तहकारगौ।
रीङ्कारमातृकानद्धककरार्णस्वरूपगौ॥ १६

रीढादुष्टमखध्वंसौ रीज्याहीनस्वभावगौ।
रीणगङ्गाजलोत्सेकौ रीत्युत्तमगतिप्रियौ॥ १७

श्वक्रीडनौ श्ववाहौ च श्वसनाशनरूपिणौ।
श्वः श्रेयसकरौ श्वभ्रमानौ श्वण्ठयदाहृतौ॥ १८

श्वसनोर्मिस्वरूपाढ्यौ श्वश्रूश्वशुररूपिणौ।
श्वगणिकोत्तमप्रीतौ श्वपाकादिसमस्तगौ॥ १९

रक्तकौ रक्षकौ रङ्गदेवते रञ्जनप्रियौ।
रतोत्साहौ रणाग्रण्यौ रणन्नूपुररञ्जनौ॥ २०

रतिसर्वस्वदौ रत्नवर्षौ रमणलालसौ।
रयिप्रायौ रहोयोगौ रसज्ञौ रस्यलोलुपौ।। २१

इत्येतदर्धनारीशनाम्नामष्टोत्तरं शतम्।
अष्टैश्वर्यप्रदं दिव्यमायुरारोग्यकारकम्।। २२

रहस्यं दुर्लभं गोप्यं पुंस्त्रीवाल्लभ्यसाधकम्।
मङ्गलानन्दसर्वस्वं देवप्रत्यक्षदायकम्।। २३

यो जपेत्परया भक्त्या सिद्धिदं मन्त्रविग्रहम्।
उमामहेश्वरप्रीत्या लभते सर्वकामनाः ।। २४

(ओं अर्धनारीश्वर इति नाममन्त्रगर्भितं इदम्।)

—*—

## श्री अर्धनारीश्वराष्टोत्तरशतनामावलिः

ओं अकाराद्यक्षराकाराभ्यां नमः। अर्धेन्दुराजशेखराभ्यां। अनादिमध्यचरमाभ्यां। अंशांशिसङ्गताभ्यां। अगाभ्यां। अक्षोभ्याभ्यां। अनघाकाराभ्यां। असमानाधिकाभ्यां। अजाभ्यां।अम्बराशाभ्यां। अमानाङ्गाभ्यां। अनाथाखिलपालनाभ्यां। उमामहेश्वराभ्यां। उच्चतमाभ्यां। उत्तमभावनाभ्यां। उरगाभरणाभ्यां। उग्रशासनाभ्यां। उत्कटाभ्यां। उभाभ्यां। उदाराभ्यां नमः। २०

ओं उरुगाम्भीर्याभ्यां नमः। उक्थ्यलीनाभ्यां। उदर्चिर्भ्यां। उद्गीथसंहिताभ्यां। उन्नाभ्यां। उर्वीभृद्वासतोषणाभ्यां। मधुगाभ्यां। मङ्गलारम्भनन्दनाभ्याम्। मनोवेगाभ्यां। मलापहारिभ्यां। मन्त्रवश्याभ्यां। मर्मविदां वराभ्यां। मरुद्वन्द्याभ्यां। महाभोगाभ्यां। मङ्गल्यभूरिवर्धनाभ्यां। मल्लिकादिसुमप्रीताभ्यां।

मदादिनाशकारणाभ्यां। श्रीकराभ्यां। श्रीपतिप्रीताभ्यां। श्रीमद्भ्यां नमः। ४०

ओं श्रीफलप्रियाभ्यां नमः। श्रीविद्यावशगाभ्यां। श्रीदाभ्यां। श्रीमत्कैलासवासिभ्यां। श्रीगर्भधारिभ्यां। श्रीमद्गुहराजप्रियात्मजाभ्यां। श्रीकालीनन्दनाभ्यां। श्रीमद्विद्याराज्ञीकलेबराभ्यां। श्रीखण्डकुङ्कुमालेपाभ्यां। श्रीशब्रह्मादिपूजिताभ्यां। श्रीचक्रनिलयाभ्यां। श्रीमद्रुद्रयज्ञप्रमोदिताभ्यां। अर्धनारीपुमाकाराभ्यां। अर्धाक्षिपालिताखिलाभ्यां। अरण्यावसथाभ्यां। अर्कचन्द्रानलविलोचनाभ्यां। अर्घ्यपाद्यादिपूजेष्टाभ्यां। अर्चनीयपदाम्बुजाभ्यां। अरुन्धतीनायकाद्याराधिताभ्यां। अर्थसिद्धिदाभ्यां नमः। ६०

ओं धराधरेन्द्रहेमाद्रिशृङ्गवासाभ्यां नमः। धनुर्धराभ्यां। धनेश्वरसखाभ्यां। धन्याभ्यां। धनञ्जयवर-प्रदाभ्यां। धम्मिल्ललग्नजटिलाभ्यां। धर्मराड्दण्डिताद्दताभ्यां। धर्मलक्षणनिष्पत्तिक्रियानुग्रहशालिभ्यां। नास्तिक्यनाशकाभ्यां। नाव्याभ्यां। नामरूपविवर्जिताभ्यां। नालम्बीवल्लकीलोलाभ्यां। नायिकानायकोत्तमाभ्यां। नारदादिस्तुतिप्रीताभ्यां। नाट्यशास्त्रप्रवर्तकाभ्यां। नाकनाथादिसंराध्याभ्यां। नाट्यलास्यगताण्डवाभ्यां। रीङ्कारभ्रमराह्लादाभ्यां। रीङ्कारात्तहकाराभ्यां। रीङ्कारमातृकानद्धककारार्णस्वरूपगाभ्यां नमः। ८०

ओं रीढादुष्टमखध्वंसाभ्यां नमः। रीज्याहीनस्वभावगाभ्यां। रीणगङ्गाजलोत्सेकाभ्यां। रीत्युत्तमगतिप्रियाभ्यां। श्वक्रीडनाभ्यां। श्ववाहाभ्यां। श्वसनाशनरूपिभ्यां। श्वश्श्रेयसकराभ्यां। श्वश्रमानाभ्यां। श्वण्ठपदाहताभ्यां। श्वसनोर्मिस्वरूपाढ्याभ्यां। श्वश्रूश्वशुररूपिभ्यां। श्वगणिकोत्तमप्रीताभ्यां। श्वपाकादिसमस्त-

गाभ्यां। रक्तकाभ्यां। रक्षकाभ्यां। रङ्गदेवताभ्यां। रञ्जनप्रियाभ्यां। रतोत्साहाभ्यां। रणाग्रणीभ्यां नमः। १००

ओं रणन्नूपुररञ्जनाभ्यां नमः। रतिसर्वस्वदाभ्यां। रत्नवर्षाभ्यां। रमणलालसाभ्यां। रयिप्रायाभ्यां। रहोयोगाभ्यां। रसज्ञाभ्यां। रस्यलोलुपाभ्यां नमः। १०८

—*—

## अर्धनारीश्वराष्टोत्तरशतनामावलिः–२

अकारादिक्षकारान्तवर्णमालाष्टोत्तरशतनामावलिः।

नमः शिवाभ्यां नवयौवनाभ्यां
विरिञ्चि विष्णिवन्द्र सुपूजिताभ्याम्।
विभूति पाटीरविलेपनाभ्यां
नमो नमः शङ्करपार्वतीभ्याम्॥

ओंकार्यै नमः। नर्तनाय। मायायै। शिवाय। वाराह्यै। याजकाय। अचिन्त्यशक्त्यै। अमृताय। आनन्दायै। आर्द्र(नन्द)ताण्डवाय। इच्छाशक्त्यै। इन्दुचूडाय। ईशतायै ईश्वरीपतये। उज्ज्वलायै। उद्भवाय। ऊर्जस्वलायै। ऊर्वशीमोहनाय। ऋभूबृन्दवरायै। ऋक्षमालाय नमः। (२०)

ओं ऋकारवर्णकायै नमः। ऋकाराङ्गाय। लिङ्गवामायै। लिङ्गेशाय। लुब्धनाशनायै। लुब्धचमीकराय। एकदन्तमात्रे। एकविग्रहाय। ऐरावत्यै। ऐणवस्त्रधराय। ओङ्कारवल्लभायै। ओषधीशधराय। और्वनेत्रायै। औदार्यविग्रहाय। अम्बिकायै। अम्बरनटाय। आर्यायै। आश्चर्यविग्रहाय। कात्यायन्यै। कामहराय नमः। (४०)

ओं खल्यायै नमः । खद्योतदन्तभिदे । गणेशजनन्यै । गङ्गाधराय । घण्टारवप्रियायै । घनाघनाशनाय । ङङ्गशब्दनाट्यायै । ङणाकराय । चण्डिकायै । चन्द्रमौलीशाय । छविरूपायै । छलप्रदाय । जटिलायै । जन्मसाफल्यपरा(प्रदा)य । झल्लरीमर्दनायै । झङ्कारनटनाय । ज्ञानशक्त्यै । ज्ञानसभेश्वराय । टङ्कशब्दनटायै । टङ्कवाद्यहस्ताय नमः । ६०

ओं ठरासनायै नमः । ठकारमर्दनाय । डम्भभ्रमणायै । डयनेश्वराय । ढक्कावाद्यकरायै । ढक्काध्वनिलास्याय । णखायुधायै । णकारवर्णनिलयाय । तटिद्रूपायै । तमोगुणाय । स्थविष्ठायै । स्थविराय । दक्षपुत्र्यै । दहनलोचनाय । धरण्यै । धर्मशास्त्रज्ञाय । नलिनाक्ष्यै । नटेश्वराय । पार्वत्यै । पञ्चवदनाय नमः । ८०

ओं फणिकेशायै नमः । फणीश्वराय । बालाम्बिकायै । बलिष्ठात्मने । भवान्यै । भद्रवाहनाय । महाराज्यै । महाकालाय । यन्त्राराध्यायै । यशःप्रदाय । रमण्यै । रक्तवर्णाङ्गाय । ललितायै । लक्ष्मीपूजिताय । वरलक्ष्मीश्वर्यै । वज्रमकुटाय । शर्वनायिकायै । शरभेशाय । षण्मुखाम्बायै । षडाननगणाश्रिताय । १००

ओं सदाशिवासनारूढायै नमः । सद्योजाताय । हरिध्वजायै । हंसनाट्यप्रियाय । लङ्कानाथपर्वतचञ्चलायै । लङ्कापर्वतदर्पहराय । क्षपापूजाप्रियायै । क्षमाय नमः । (१०८) उमामहेश्वराभ्यां नमः ।

—*—

# अर्धनारीश्वराष्टोत्तरशतनामावलिः—३

अम्भोधरश्यामलकुन्तलायै तटित्प्रभाताम्रजटाधराय ।
निरीश्वरायै निखिलेश्वराय नमः शिवायै च नमः शिवाय ॥

धम्मिल्लं तिलकोज्ज्वलं गलतटे सूत्रं च माङ्गल्यकं
ताटङ्कं कुचमण्डलं त्रिवलिकं पाणौ लसत्कङ्कणम्।
काञ्चीदामधरार्धमध्यवलयं सौवर्णचित्राम्बरं
शिञ्जन्नूपुरमेकपादकमलं ध्याये महः साम्बकम्॥

—*—

श्रीमत्सिंहासनस्थायै नमः । श्रीमत्कैलासवासिने । शङ्करार्धशरीरिण्यै । गिरिजार्धशरीरिणे । नीलेन्दीवरदामाङ्ग्यै । कर्पूरवरवर्चसे । स्फुरत्किरीटभूषायै । जटामण्डलधारिणे । सुपुष्पयुतकेशायै । सुधांशुयुतमौलिने । लसत्कस्तूरिफालायै । तिर्यक्पुण्ड्रललाटिने । कर्णान्तदीर्घनेत्रायै । रविचन्द्राग्निचक्षुषे । स्वर्णताटङ्कवर्णायै । स्वर्णकुण्डलधारिणे । दरस्मितमुखाब्जायै । दरहासोज्ज्वलन्मुखाय । लसत्सौभाग्यकर्णायै । श्रीभासितगणाय ते नमः । (२०)

ओं उन्नतस्तनयुग्मायै । कठिनोत्तुङ्गवक्षसे । इक्षुकार्मुकहस्तायै । पिनाकवरपाणिने । पाशाङ्कुशकराब्जायै । त्रिशूलमृगधारिणे । पुष्पबाणकराब्जायै । दिव्यबाणासिपाणिने । मनोभवप्राणदायै । मनोभवविदारिणे । दिव्यहाटकचेलायै । करटीकृत्तिवासिने । दिव्यगन्धविलिप्ताङ्ग्यै । भस्मसन्नद्धदेहिने । सदासंपूर्णकामायै । सदासंपत्प्रदायिने । हिमाचलेन्द्रकन्यायै । हिमाद्रिविनुताङ्घ्रये । आद्यन्तशिवरूपायै । कल्याणपुरुषाय ते नमः । ४०

ओं श्रीचक्रपुरवासायै । श्रीचक्रोत्पत्तिकारिणे । पद्मारण्यनिवासायै । बिल्वारण्यनिवासिने । आदितत्वप्रकाशायै । बीजबिन्दुकलात्मने । महामायास्वरूपायै । मायाविरहिताय ते । दिव्यभूषणभूषायै । दिव्यभूषाविराजिने । रत्नमन्दिरवासायै ।

रत्नमण्डपवर्तिने। चिन्तामणिगृहस्थायै। चिन्ताशोकविनाशिने। तापत्रयविभेदिन्यै । पुरत्रयनिवारिणे । लोकत्रयगृहस्थायै। नेत्रत्रयविभासिने। चतुर्वेदान्तवेद्यायै। चतुर्वक्त्रामरार्चिषे नमः । ६०

ओं शिवपादाब्जचिन्तायै । शिवाभीष्टप्रदायिने । शिवलोकनिवासायै। शिवलोकप्रदायिने। शिवांघ्रिभक्तपालायै। गिरिजाभक्तपालिने । सुकुमारशरीरायै । सौन्दर्यघनमूर्तये । श्रीविद्यामन्त्ररूपायै । पञ्चाक्षरमयाय ते । श्यामलापीठवासायै । महालिङ्ग स्वरूपिणे । कमलाराध्यपादायै । कमलाक्षनुताङ्घ्रये । शारदार्चितदिव्याङ्घ्र्यै । पुरत्रयमुखार्चिषे । मल्लिकादामभूषायै । पद्मकैरवमालिने। मन्दाकिनीस्वरूपायै। मन्दाकिनीधरायते नमः । ८०

ओं मौक्तिकाफलहारायै । मुक्तारुद्राक्षधारिणे । शिववामाङ्गसंस्थायै । उमालिङ्गनमोदिने । सर्वलोकशरण्यायै । सर्वलोकविधायिने । गजाननस्कन्दमात्रे । गजास्यगुहपालिने । वन्दारुजनसेव्यायै । अनन्तानन्दनन्दिने। नन्दीशसैन्यपालायै । सिद्धमार्गनिदर्शिने । संसाररोगनाशायै । हंसार्कोपास्यमूर्तये । वीणागानप्रवीणायै । वीणाराजितपाणये । कोणत्रयनिविष्टायै । बाणार्चितपदाय ते। अप्राकृतपुरस्थायै। मूलप्रकृतिरूपिणे नमः । १००

ओं मूलमन्त्रस्वरूपायै । मूर्तित्रयनियोगिने । चिदग्निभूत-देहायै । सच्चिदानन्दमूर्तये । शिवशक्त्यैक्यवेषायै । अपर्णाश्लिष्टमूर्तये । शाश्वतैश्वर्ययुक्तायै । सर्वज्ञाय नमोऽस्तु ते । (१०८)

ओं अर्धाद्रिशिखरावासार्धनारीश्वरमूर्तये नमः ।

—*—

# अर्धनारीश्वराष्टोत्तरशतनामस्तोत्रम्–४

चामुण्डिकाम्बा श्रीकण्ठः पार्वती परमेश्वरः ।
महाराज्ञी महादेवः सदाराध्या सदाशिवः ॥ १

शिवार्धाङ्गी शिवार्धाङ्गो भैरवी कालभैरवः ।
शक्तित्रितयरूपाढ्या मूर्तित्रितयरूपवान् ॥ २

कामकोटिसुपीठस्था काशीक्षेत्रसमाश्रयः ।
दाक्षायणी दक्षवैरी शूलिनी शूलधारकः ॥ ३

ओङ्कारपञ्जरशुकी हरिशङ्कररूपवान् ।
श्रीमद्गणेशजननी षडाननसुजन्मभूः ॥ ४

पञ्चप्रेतासनारूढा पञ्चब्रह्मस्वरूपभृत् ।
चण्डमुण्डशिरश्छेत्री जलन्धरशिरोहरः ॥ ५

सिंहवाहा वृषारूढः श्यामाभा स्फटिकप्रभः ।
महिषासुरसंहन्त्री गजासुरविमर्दनः ॥ ६

महाबलाचलावासा महाकैलासवासभूः ।
भद्रकाली वीरभद्रो मीनाक्षी सुन्दरेश्वरः ॥ ७

भण्डासुरादिसंहर्त्री दुष्टान्धकविमर्दनः ।
मधुकैटभसंहर्त्री मधुरापुरनायकः॥ ८

कालत्रयस्वरूपाढ्या कार्यत्रयविधायकः ।
गिरिजाता गिरीशश्च वैष्णवी विष्णुवल्लभः ॥ ९

विशालाक्षी विश्वनाथः पुष्पास्त्रा विष्णुमार्गणः ।
कौसुंभवसनोपेता व्याघ्रचर्माम्बरावृतः ॥ १०

मूलप्रकृतिरूपाढ्या परब्रह्मस्वरूपवान् ।
रुण्डमालाविभूषाढ्या लसद्रुद्राक्षमालिकः ॥ ११

मनोरूपेक्षुकोदण्डा महामेरुधनुर्धरः ।
चन्द्रचूडा चन्द्रमौलिः महामाया महेश्वरः ॥ १२

महाकाली महाकालो दिव्यरूपा दिगम्बरः ।
बिन्दुपीठसुखासीना श्रीमदोंकारपीठगः ॥ १३

हरिद्राकुङ्कुमालिप्ता भस्मोद्धूलितविग्रहः ।
महापद्माटवीलोला महाबिल्वाटवीप्रियः ॥ १४

सुधामयी विषधरो मातङ्गी मकुटेश्वरः ।
वेदवेद्या वेदवाजी चक्रेशी विष्णुचक्रदः ॥ १५

जगन्मयी जगद्रूपो मृडानी मृत्युनाशनः ।
रामार्चितपदाम्भोजा कृष्णपुत्रवरप्रदः ॥ १६

रमावाणीसुसंसेव्या विष्णुब्रह्मसुसेवितः ।
सूर्यचन्द्राग्निनयना तेजस्त्रयविलोचनः ॥ १७

चिदग्निकुण्डसंभूता महालिङ्गसमुद्भवः ।
कम्बुकण्ठी कालकण्ठो वज्रेशी वज्रपूजितः ॥ १८

त्रिकण्टकी त्रिभङ्गीशो भस्मरक्षा स्मरान्तकः ।
हयग्रीववरोद्धात्री मार्कण्डेयवरप्रदः ॥ १९

चिन्तामणिगृहावासा मन्दराचलमन्दिरः ।
विन्ध्याचलकृतावासा विन्ध्यशैलार्य पूजितः ॥ २०

मनोन्मनी लिङ्गरूपो जगदम्बा जगत्पिता ।
योगनिद्रा योगगम्यो भवानी भवमूर्तिमान्॥ २१

श्रीचक्रात्मरथारूढा धरणीधरसंस्थितः ।
श्रीविद्या वेद्यमहिमा निगमागमसंश्रयः ॥ २२

दशशीर्षसमायुक्ता पञ्चविंशतिशीर्षवान् ।
अष्टादशभुजायुक्ता पञ्चाशत्करमण्डितः ॥ २३

ब्राह्म्यादिमातृकारूपा शताष्टीकादशात्मवान् ।
स्थिरा स्थाणुस्तथा बाला सद्योजात उमा मृडः ॥ २४

शिवा शिवश्च रुद्राणी रुद्रश्चैवेश्वरीश्वरः ।
कदम्बकाननावासा दारुकारण्यलोलुपः ॥ २५

नवाक्षरीमनुस्तुत्या पञ्चाक्षरमनुप्रियः ।
नवावरणसंपूज्या पञ्चायतनपूजितः ॥ २६

देहस्थषट्चक्रदेवी दहराकाशमध्यगः ।
योगिनीगणसंसेव्या भृङ्ग्यादिप्रमथावृतः ॥ २७

उग्रतारा घोररूपः शर्वाणी शर्वमूर्तिमान् ।
नागवेणी नागभूषो मन्त्रिणी मन्त्रदैवतः ॥ २८

ज्वलज्जिह्वा ज्वलन्नेत्रो दण्डनाथा दृगायुधः ।
पार्थाञ्जनास्त्रसन्धात्री पार्थपाशुपतास्त्रदः ॥ २९

पुष्पवच्चक्रताटङ्का फणिराजसुकुन्तकः ।
बाणपुत्रीवरोद्धात्री बाणासुरवरप्रदः ॥ ३०

व्यालकञ्चुकसंवीता व्यालयज्ञोपवीतवान् ।
नवलावण्यरूपाढ्या नवयौवनविग्रहः ॥ ३१

नाट्यप्रिया नाट्यमूर्तिस्त्रिसन्ध्या त्रिपुरान्तकः ।
तन्त्रोपचारसुप्रीता तन्त्रादिमविधायकः ॥ ३२

नववल्लीष्टवरदा नववीरसुजन्मभूः ।
भ्रमरज्या वासुकिज्यो भेरुण्डा भीमपूजितः ।। ३३

निशुम्भशुम्भदमनी नीचापस्मारमर्दनः ।
सहस्राराम्बुजारूढा सहस्रकमलार्चितः ।। ३४

गङ्गासहोदरी गङ्गाधरो गौरी त्रियम्बकः ।
श्रीशैलभ्रमराम्बाख्या मल्लिकार्जुनपूजितः ।। ३५

भवतापप्रशमनी भवरोगनिवारकः ।
चन्द्रमण्डलमध्यस्था मुनिमानसहंसकः ।। ३६

प्रत्यङ्गिरा प्रसन्नात्मा कामेशी कामरूपवान् ।
स्वयंप्रभा स्वप्रकाशः कालरात्री कृतान्तहृत् ।। ३७

सदाऽन्नपूर्णा भिक्षाटो वनदुर्गा वसुप्रदः ।
सर्वचैतन्यरूपाढ्या सच्चिदानन्दविग्रहः ।। ३८

सर्वमङ्गलरूपाढ्या सर्वकल्याणदायकः ।
राजराजेश्वरी श्रीमद्राजराजप्रियङ्करः ।। ३९

अर्धनारीश्वरस्येदं नाम्नामष्टोत्तरं शतम् ।
पठन्नर्चन् सदा भक्त्या सर्वसाम्राज्यमाप्नुयात् ।। ४०

(स्कान्दतः)

—*—

# अर्धनारीश्वराष्टोत्तरशतनामावलिः

ओं चामुण्डिकाम्बायै श्रीकण्ठाय नमः । पार्वत्यै परमेश्वराय । महाराज्ञ्यै महादेवाय । सदाराध्यायै सदाशिवाय । शिवार्धाङ्ग्यै शिवार्धाङ्गाय । भैरव्यै कालभैरवाय । शक्तित्रितय-

रूपाढ्यायै मूर्तित्रितयरूपवते। कामकोटिसुपीठस्थायै काशी-क्षेत्रसमाश्रयाय। दाक्षायण्यै। दक्षवैरिणे। शूलिन्यै शूलधारकाय नमः। १०

ओं ओङ्कारपञ्जरशुक्यै हरिशङ्कररूपवते नमः। श्रीमद्गणेशजनन्यै षडाननसुजन्मभुवे। पञ्चप्रेतासनारूढायै पञ्चब्रह्मस्वरूपभृते। चण्डमुण्डशिरश्छेत्र्यै जलन्धरशिरोहराय। सिंहवाहायै वृषारूढाय। श्यामाभायै स्फटिकप्रभाय। महिषासुरसंहन्त्र्यै गजासुरविमर्दनाय। महाबलाचलावासायै महाकैलासवासभुवे। भद्रकाल्यै वीरभद्राय। मीनाक्ष्यै सुन्दरेश्वराय नमः। २०

ओं भण्डासुरादिसंहर्त्र्यै दुष्टान्धकविमर्दनाय नमः। मधुकैटभसंहर्त्र्यै मधुरापुरनायकाय। कालत्रयस्वरूपाढ्यायै। कार्यत्रयविधायकाय। गिरिजातायै गिरीशाय। वैष्णव्यै विष्णुवल्लभाय। विशालाक्ष्यै विश्वनाथाय। पुष्पास्त्रायै विष्णुमार्गणाय। कौसुम्भवसनोपेतायै व्याघ्रचर्माम्बरावृताय। मूलप्रकृतिरूपाढ्यायै परब्रह्मस्वरूपवते। रुण्डमालाविभूषाढ्यायै लसद्रुद्राक्षमालिकाय नमः। ३०

ओं मनोरूपेक्षकोदण्डायै महामेरुधनुर्धराय नमः। चन्द्रचूडायै चन्द्रमौलये। महामायायै महेश्वरायै। महाकाल्यै। महाकालाय। दिव्यरूपायै दिगम्बराय। बिन्दुपीठसुखासीनायै श्रीमदोङ्कारपीठगाय। हरिद्राकुङ्कुमालिप्तायै भस्मोद्धूलित-विग्रहाय। महापद्माटवीलोलायै महाबिल्वाटवीप्रियाय। सुधामय्यै विषधराय। मातङ्ग्यै मकुटेश्वराय नमः। ४०

ओं वेदवेद्यायै वेदवाजिने नमः। चक्रेश्यै विष्णुचक्रदाय। जगन्मय्यै जगद्रूपाय। मृडान्यै मृत्युनाशनाय। रामार्चित-

पदाम्भोजायै कृष्णपुत्रवरप्रदाय । रमावाणीसुसंसेव्यायै विष्णुब्रह्मसुसेविताय । सूर्याग्निचन्द्रनयनायै तेजस्त्रय-विलोचनाय। चिदग्निकुण्डसंभूतायै महालिङ्गसमुद्भवाय। कम्बुकण्ठ्यै कालकण्ठाय। वज्रेश्यै वज्रपूजिताय नमः। ५०

ओं त्रिकण्टक्यै त्रिभङ्गीशाय नमः । भस्मरक्षायै स्मरान्तकाय। हयग्रीववरोद्धात्र्यै मार्कण्डेयवरप्रदाय । चिन्तामणिगृहावासायै मन्दराचलमन्दिराय । विन्ध्या चलकृतावासायै विन्ध्यशैलार्यपूजिताय। मनोन्मन्यै लिङ्गरूपाय। जगदम्बायै जगत्पित्रे । योगनिद्रायै योगगम्याय । भवान्यै भवमूर्तिमते। श्रीचक्रात्मरथारूढायै धरणीधरसंस्थिताय नमः। ६०

ओं श्रीविद्यावेद्यमहिम्ने निगमागमसंश्रयाय नमः । दशशीर्षसमायुक्तायै पञ्चविंशतिशीर्षवते । अष्टादशभुजा-युक्तायै पञ्चाशत्करमण्डिताय । ब्राह्म्यादिमातृका युक्तायै । शताष्टीकादशात्मवते। स्थिरायै स्थाणवे। बालायै सद्योजाताय। उमायै मृडाय। शिवायै शिवाय। रुद्राण्यै रुद्राय। ईश्वर्यै ईश्वराय नमः। ७०

ओं कदम्बकाननावासायै दारुकारण्यलोलुपाय नमः । नवाक्षरीमनुस्तुत्यायै पञ्चाक्षरमनुप्रियाय । नवावरणसंपूज्यायै पञ्चायतनपूजिताय । देहस्थषट्चक्रदेव्यै दहराकाशमध्यगाय । योगिनीगणसंसेव्यायै भृङ्ग्यादिप्रमथावृताय । उग्रतारायै घोररूपायै। शर्वाण्यै शर्वमूर्तिमते । नागवेण्यै नागभूषाय । मन्त्रिण्यै मन्त्रदैवताय। ज्वलज्जिह्वायै ज्वलन्नेत्राय नमः। ८०

ओं दण्डनाथायै दृगायुधाय नमः। पार्थाञ्जिनास्त्रसन्धात्र्यै पार्थपाशुपतास्त्रदाय। पुष्पवच्चक्रताटङ्कायै फणिराजसुकुन्तलाय।

बाणपुत्रीवरोद्धात्र्यै बाणासुरवरप्रदाय । व्यालकञ्चुकसंवीतायै व्यालयज्ञोपवीतवते। नवलावण्यरूपाढ्यायै नव यौवनविग्रहाय। नाट्यप्रियायै नाट्यमूर्तये । त्रिसन्ध्यायै त्रिपुरान्तकाय । तन्त्रोपचारसुप्रीतायै तन्त्रादिमविधायकाय । नववल्लीष्टवरदायै नववीरसुजन्मभुवे नमः । ९०

ओं भ्रमरज्यायै वासुकिज्याय नमः । भेरुण्डायै भीमपूजिताय। निशुम्भशुम्भदमन्यै नीचापस्मारमर्दनाय । सहस्राराम्बुजारूढायै सहस्रकमलार्चिताय । गङ्गासहोदर्यै गङ्गाधराय । गौर्यै त्रियंम्बकाय । श्रीशैलभ्रमराम्बाख्यायै मल्लिकार्जुनपूजिताय । भवतापप्रशमन्यै भवरोगनिवारकाय । चन्द्रमण्डलमध्यस्थायै मुनिमानसहंसकाय । प्रत्यङ्गिरायै प्रसन्नात्मने नमः । १००

ओं कामेश्यै कामरूपवते नमः । स्वयंप्रभायै स्वप्रकाशाय। कालरात्र्यै कृतान्तहृते । सदाऽन्नपूर्णायै भिक्षाटाय । वनदुर्गायै वसुप्रदाय । सर्वचैतन्यरूपाढ्यायै सच्चिदानन्दविग्रहाय । सर्वमङ्गलरूपाढ्यायै सर्वकल्याणदायकाय । राजराजेश्वर्यै श्रीमद्राजराजप्रियङ्कराय नमः । १०८

—*—

# श्रीकैलासनाथाष्टोत्तरशतनामावलिः

कैलासशैलविनिवास वृषाकपे हे
मृत्युञ्जय त्रिणयन त्रिजगन्निवास।
नारायणप्रिय मदापह शक्तिनाथ
संसारदुःखदहनात् जगदीश रक्ष ।।

महाकैलासशिखरनिलयाय नमो नमः । हिमाचलेन्द्र-तनयावल्लभाय । वामभागकलत्रार्धशरीराय । विलसद्दिव्य-कर्पूरगौराङ्गाय । कोटिकन्दर्पलावण्य दिव्याङ्गाय । रत्नमौक्तिक-वैडूर्यकिरीटाय । मन्दाकिनीजलोपेतमूर्धजाय । चारुशीतांशु शकलशेखराय । त्रिपुण्ड्रविलसत्फालफलकाय । सोमपावक-मार्ताण्डलोचनाय । वासुकीतक्षकलसत्कुण्डलाय । चारुप्रसन्न-वदनसुस्मेराय । समुद्रोद्भूतगरलकन्धराय । कुरङ्गविलसत्पाणि-कमलाय । पाशव्यध लसद्दिव्यकराब्जाय । वराभय प्रदकरयुगलाय । अनेकरत्नमाणिक्यसुहाराय । मौक्तिकस्वर्णरुद्राक्षमालिकाय । हिरण्यकिङ्किणीयुक्तकङ्कणाय । नागेन्द्रयज्ञोपवीतशोभिताय नमो नमः । २०

ओं मन्दारमल्लिकादाम भूषिताय नमो नमः । मत्तमातङ्गसत्कृत्तिवसनाय । सौदामिनीसमच्छायसुवक्त्राय । शिञ्जानमणिमञ्जीरचरणाय । चक्राब्जध्वजयुक्ताङ्घ्रिपङ्कजाय । अपर्णाकुचकस्तूरी रञ्जिताय । गुहमत्तेभवदनजनकाय । बिडौजाविधिवैकुण्ठनमिताय । कमलाभारतीन्द्राणी सेविताय । पञ्चाक्षरीमहामन्त्रस्वरूपाय । सहस्रकोटितपनसङ्काशाय । अनेककोटिशीतांशुप्रकाशाय । कैलासतुल्यवृषभवाहनाय । नन्दिभृङ्गिमुखानेकसंस्तुताय । निजपादाम्बुजासक्तसुलभाय । प्रारब्धजन्ममरणविहीनाय । संसारमायादुःखौघभेषजाय । ब्रह्मादिकीटपर्यन्तव्यापकाय । चराचरस्थूलसूक्ष्मकल्पकाय । सर्वसंसारचक्राख्यस्यन्दनाय नमो नमः । ४०

ओं सुधाकरजगच्चक्षूरथाङ्गाय नमो नमः । यजुः सामाथर्वण ऋक्तुरङ्गाय । सरसीरुहसञ्जातप्राप्तसारथये । वैकुण्ठनाथज्वलित-सायकाय । चामीकरमहाशैलकार्मुकाय । भुजङ्गराजविल-

सच्छिञ्जिनीकृतये नमः । निजाक्षिजाग्नि-सन्दग्धत्रिपुराय । जलन्धरासुरशिरश्छेदनाय । मुरारिनेत्र-पूज्याङ्घ्रिपङ्कजाय । सहस्रभानुसङ्काश चक्रदाय । कृतान्तकमहादर्पनाशनाय । मार्कण्डेयमनोऽभीष्टदायकाय । समस्तलोकगीर्वाणशरण्याय ज्वलज्ज्वालावलीभीम-विषदा(पा)य। शिक्षिताण्ड (न्ध)क-दैतेयविक्रमाय । शम्बरान्तकलावण्यदेहसंहारिणे । रतिप्रार्थित-माङ्गल्यफलदाय । स्वद्रोहिदक्षसवनविघाताय । सनकादिसमा-युक्तदक्षिणामूर्तये। घोरापस्मारदनुजदमनाय नमो नमः । ६०

ओं अनन्तवेदवेदान्त संवेद्याय नमो नमः । नासाग्रन्यस्तनिटिलनयनाय । उपमन्युमहामोहभञ्जनाय । केशवब्रह्मसंग्रामनिवाराय । द्रुहिणाम्भोजनयनदुर्लभाय । धर्मार्थिकामकैवल्यसूचकाय । उत्पत्तिस्थितिसंहारकारणाय । अनन्तकोटिब्रह्माण्डनायकाय । कोलाहलमहोदारशरभाय । नरसिंहमहाकोपशमनाय । प्रपञ्चनाशकल्पान्तभैरवाय । हिरण्यगर्भोत्तमाङ्गच्छेदनाय । पतञ्जलिव्याघ्रपादसन्नुताय । महाताण्डवचातुर्यपण्डिताय । महापातकपापघ्नपादुकाय । विमलप्रणवाकारमध्यमाय । चण्डेशदोषविच्छेदप्रवीणाय । रजस्तामससत्वाख्य गुणेशाय । दारुकावन मौनिस्त्रीमोहकाय । शाश्वतैश्वर्यविभवसहिताय नमो नमः । ८०

ओं अखण्डसच्चिदानन्दविग्रहाय नमो नमः । अशेष-देवताराध्यपादुकाय । अप्राकृतमहादिव्यपादुकाय (शरीराय) पृथिव्यप्तेजोवाय्वाकाशतुरीयाय । वसुन्धरामहाभाग्यसूचनाय । देवकीसुतकौन्तेयवरदाय । अज्ञानतिमिरध्वान्तभास्कराय । अव्यया(द्वया)नन्दविज्ञान सुखदाय। अविद्यादिरहितनिर्गुणाय। सप्तकोटिमहामन्त्रस्वरूपाय । शब्दस्पर्शरूपरसगन्धसाधनाय

(साराय) । अक्षरक्षरकूटस्थपरमाय । षोडशाब्दवयोपेत दिव्याङ्गाय । सहजानन्दसन्दोहसंयुताय । निस्तुलौदार्यसौभाग्य-प्रमदाय । कैवल्यपरमानन्दनियोगाय । हिरण्यज्योति-विभ्राजत्सुप्रभाय । ज्योतिषामुत्तमज्योतीरूपदाय । अनूपममहा-सौख्यपुरस्थाय । अचिन्त्यदिव्यमहिमारञ्जिताय नमो नमः । १००

ओं अनित्यदेहविभ्रान्तिरहिताय नमो नमः । सक्तप्रपन्नदौर्भाग्यच्छेदनाय । षट्त्रिंशत्तत्वप्रासादभूनाथाय । आदिमध्यान्तरहितदेहस्थाय । परानन्दस्वरूपार्थबोधनाय । इच्छाज्ञानक्रियाशक्तिनियोगाय । परा(र)शक्तिसमायुक्त-परेशाय । सहस्रारमहापद्ममन्दिराय नमो नमः (१०८)

—*—

# लिङ्गाष्टोत्तरशतनामावलिः

लिङ्गमूर्तये नमः । शिवलिङ्गाय । अद्भुतलिङ्गाय । अनुगतलिङ्गाय । अव्यक्तलिङ्गाय । अर्थलिङ्गाय । अच्युतलिङ्गाय । अनन्तलिङ्गाय । अमृतलिङ्गाय । अनेकलिङ्गाय । अनेकस्वरूपलिङ्गाय । अनादिलिङ्गाय । आदिलिङ्गाय । आनन्दलिङ्गाय । आत्मानन्दलिङ्गाय । आर्जितपापविनाश-लिङ्गाय । आश्रितरक्षकलिङ्गाय । इन्दुलिङ्गाय । इन्द्रियलिङ्गाय । इन्द्रादिप्रियलिङ्गाय नमः । २०

ओं ईश्वरलिङ्गाय नम । ऊर्जितलिङ्गाय । ऋग्वेदश्रुतिलिङ्गाय । एकलिङ्गाय । ऐश्वर्यलिङ्गाय । ओङ्कारलिङ्गाय । ह्रीङ्कारलिङ्गाय । कनकलिङ्गाय । वेदलिङ्गाय । परमलिङ्गाय । व्योमलिङ्गाय । सहस्रलिङ्गाय । वह्निलिङ्गाय । पुराणलिङ्गाय । श्रुतिलिङ्गाय ।

पाताललिङ्गाय । ब्रह्मलिङ्गाय । रहस्यलिङ्गाय । सप्तद्वीपोर्ध्व-लिङ्गाय । नागलिङ्गाय नमः । ४०

ओं तेजोलिङ्गाय नमः । ऊर्ध्वलिङ्गाय । अथर्वलिङ्गाय । सामलिङ्गाय । यज्ञाङ्गलिङ्गाय । यज्ञलिङ्गाय । तत्वलिङ्गाय । देवलिङ्गाय । विग्रहलिङ्गाय । भावलिङ्गाय । रजोलिङ्गाय । सत्वलिङ्गाय । स्वर्णलिङ्गाय । स्फटिकलिङ्गाय । भवलिङ्गाय । त्रैगुण्यलिङ्गाय । मन्त्रलिङ्गाय । पुरुषलिङ्गाय । सर्वात्मलिङ्गाय । सर्वलोकाङ्गलिङ्गाय नमः । ६०

ओं बुद्धिलिङ्गाय नमः । अहङ्कारलिङ्गाय । भूतलिङ्गाय । महेश्वरलिङ्गाय । सुन्दरलिङ्गाय । सुरेश्वरलिङ्गाय । सुरेशलिङ्गाय । महेशलिङ्गाय । शङ्करलिङ्गाय । दानवनाशलिङ्गाय । रविचन्द्रलिङ्गाय । रूपलिङ्गाय । प्रपञ्चलिङ्गाय । विलक्षणलिङ्गाय । तापनिवारणलिङ्गाय । स्वरूपलिङ्गाय । सर्वलिङ्गाय । प्रियलिङ्गाय । रामलिङ्गाय । मूर्तिलिङ्गाय नमः । ८०

ओं महेशलिङ्गाय नमः । वेदान्तलिङ्गाय । विश्वेश्वरलिङ्गाय । योगिलिङ्गाय । हृदयलिङ्गाय । चिन्मयलिङ्गाय । चिद्धनलिङ्गाय । महेशलिङ्गाय । लङ्कापुरलिङ्गाय । ललितलिङ्गाय । चिदम्बरलिङ्गाय । नारदसेवितलिङ्गाय । कमललिङ्गाय । कैलासलिङ्गाय । करुणारसलिङ्गाय । शान्तलिङ्गाय । गिरिलिङ्गाय । वल्लभलिङ्गाय । शङ्करलिङ्गाय । सर्वजनपूजितलिङ्गाय नमः । (१००)

ओं सर्वपातकनाशकलिङ्गाय नमः । गौरीलिङ्गाय । वेदस्वरूपलिङ्गाय । सकलजनप्रियलिङ्गाय । सकलजगद्रक्ष-कलिङ्गाय । इष्टकाम्यार्थफलसिद्धिदलिङ्गाय । शोभितलिङ्गाय । मङ्गललिङ्गाय नमः । १०८

—*—

नृसिंहकृता

# शरभाष्टोत्तरशतनामस्तुतिः

नमो रुद्राय शर्वाय महाग्रासाय विष्णवे।
नम उग्राय भीमाय नमः श्रीदाय मन्यवे ॥ १

नमो भवाय शर्वाय शङ्कराय शिवाय ते।
कालकालाय कालाय महाकालाय मृत्यवे ॥ २

वीराय वीरभद्राय क्षयद्वीराय शूलिने।
महादेवाय महते पशूनां पतये नमः ॥ ३

एकाय नीलकण्ठाय श्रीकण्ठाय पिनाकिने।
नमोऽनन्ताय सूक्ष्माय नमस्ते मृत्युमन्यवे ॥ ४

पराय परमेशाय परात्परतराय ते।
परात्पराय विश्वाय नमस्ते विश्वमूर्तये ॥ ५

नमो विष्णुकलत्राय विष्णुक्षेत्राय भानवे।
कैवर्ताय किराताय महाव्याधाय शाश्वते ॥ ६

भैरवाय शरण्याय महाभैरवरूपिणे।
नमो नृसिंहसंहर्त्रे कालकालपुरारये ॥ ७

महापापौघसंहर्त्रे विष्णुमायान्तकारिणे।
त्र्यम्बकाय त्र्यक्षराय शिपिविष्टाय मीढुषे ॥ ८

मृत्युञ्जयाय शर्वाय सर्वज्ञाय मखारये।
मखेशाय वरेण्याय नमस्ते वह्निरूपिणे ॥ ९

महाप्राणोत्थ जिह्वाय प्राणापानप्रवर्तिने।

त्रिगुणाय त्रिशूलाय गुणातीताय योगिने ॥ १०

संसाराय प्रवाहाय महायन्त्रप्रवर्तिने ।
नमश्चन्द्राग्निसूर्याय मुक्तिवैचित्र्यहेतवे ॥ ११

वरदायावताराय सर्वकारणहेतवे ।
कपालिने करालाय पतये पुण्यकीर्तये ॥ १२

अमोघायाग्निनेत्राय लकुलीशाय शम्भवे ।
भिषक्तमाय मुण्डाय दण्डिने योगरूपिणे ॥ १३

मेघवाहाय देवाय पार्वतीपतये नमः ।
अव्यक्ताय विशोकाय स्थिराय स्थिरधन्वने ॥ १४

स्थाणवे कृत्तिवासाय नमः पञ्चार्थहेतवे ।
वरदायैकपादाय नमश्चन्द्रार्धमौलये ॥ १५

नमस्तेऽध्वरराजाय पयसां पतये नमः ।
योगीश्वराय नित्याय सत्याय परमेष्ठिने ॥ १६

सर्वात्मने नमस्तुभ्यं नमः सर्वेश्वराय ते ।
एकद्वित्रिचतुःपञ्चकृत्वस्तेऽस्तु नमो नमः ॥ १७

दशकृत्वस्तु साहस्रकृत्वस्ते च नमो नमः ।
नमोऽपरिमितकृत्वोऽनन्तकृत्वो नमो नमः ॥ १८

नमो नमो नमो भूयः पुनर्भूयो नमो नमः ।
नाम्नामष्टशतेनैव नत्वाऽमृतमयेन तु ।
पुनस्तु प्रार्थयामास नृसिंहः शरभेश्वरम् ॥ १९

—लिङ्गपुराणतः

—*—

# शरभाष्टोत्तरशतनामावलिः

ओं रुद्राय नमः । शर्वाय । महाग्रासाय । विष्णवे । उग्राय । भीमाय । श्रीदाय । मन्यवे । भवाय । शर्वाय । शङ्कराय । शिवाय । कालकालाय । कालाय । महाकालाय । मृत्यवे । वीराय । वीरभद्राय । क्षयद्वीराय । शूलिने नमः । २०

ओं महादेवाय नमः । महते । पशूनां पतये । एकाय । नीलकण्ठाय । श्रीकण्ठाय । पिनाकिने । अनन्ताय । सूक्ष्माय । मृत्युमन्यवे । पराय । परमेशाय । परात्परतराय । परात्पराय । विश्वाय । विश्वमूर्तये । विष्णुकलत्राय । विष्णुक्षेत्राय । भानवे । कैवर्ताय नमः । ४०

ओं किराताय नमः । महाव्याधाय । शाश्वते । भैरवाय । शरण्याय । महाभैरवरूपिणे । नृसिंहसंहर्त्रे । कालकालपुरारये । महापापौघसंहर्त्रे । विष्णु मायान्तकारिणे । त्र्यम्बकाय । त्र्यक्षराय । शिपिविष्टाय । मीढुषे । मृत्युञ्जयाय । शर्वाय । सर्वज्ञाय । मखारये । मखेशाय । वरेण्याय नमः । ६०

ओं वह्निरूपिणे नमः । महाप्राणोत्थजिह्वाय । प्राणापानप्रवर्तिने । त्रिगुणाय । त्रिशूलाय । गुणातीताय । योगिने । संसाराय । प्रवाहाय । महायन्त्रप्रवर्तिने । चन्द्राग्निसूर्याय । मुक्तिवैचित्र्यहेतवे । वरदाय । अवताराय । सर्वकारणहेतवे । कपालिने । करालाय । पतये । पुण्यकीर्तये । अमोघाय नमः । ८०

ओं अग्निनेत्राय नमः । लकुलीशाय । शंभवे । भिषक्तमाय । मुण्डाय । दण्डिने । योगरूपिणे । मेघवाहाय । देवाय । पार्वतीपतये । अव्यक्ताय । विशोकाय । स्थिराय । स्थिरधन्वने । स्थाणवे । कृत्तिवासाय । पञ्चार्धहेतवे । वरदाय । एकपादाय । चन्द्रार्धमौलये नमः । १००

ओं अध्वरराजाय नमः। पयसां पतये। योगीश्वराय। नित्याय। सत्याय। परमेष्ठिने। सर्वात्मने। सर्वेश्वराय नमः। १०८

—*—

१

# शिवाष्टोत्तरशतनामस्तोत्रम्

शिवो महेश्वरः शम्भुः पिनाकी शशिशेखरः।
वामदेवो विरूपाक्षः कपर्दी नीललोहितः॥ १

शङ्करः शूलपाणिश्च खट्वाङ्गी विष्णुवल्लभः।
शिपिविष्टोऽम्बिकानाथः श्रीकण्ठो भक्तवत्सलः॥ २

भवः शर्वस्त्रिलोकेशः शितिकण्ठः शिवाप्रियः।
उग्रः कपाली कामारिः अन्धकासुरसूदनः॥ ३

गङ्गाधरो ललाटाक्षः कालकालः कृपानिधिः।
भीमः परशुहस्तश्च मृगपाणिर्जटाधरः॥ ४

कैलासवासी कवची कठोरस्त्रिपुरान्तकः।
वृषाङ्को वृषभारूढो भस्मोद्धूलितविग्रहः॥ ५

सामप्रियः स्वरमयः त्रयीमूर्तिरनीश्वरः।
सर्वज्ञः परमात्मा च सोमसूर्याग्निलोचनः॥ ६

हविर्यज्ञमयः सोमः पञ्चवक्त्रः सदाशिवः।
विश्वेश्वरो वीरभद्रो गणनाथः प्रजापतिः॥ ७

हिरण्यरेता दुर्धर्षो गिरीशो गिरिशोऽनघः।
भुजङ्गभूषणो भर्गो गिरिधन्वा गिरिप्रियः॥ ८

कृत्तिवासाः पुरारातिर्भगवान् प्रमथाधिपः ।
मृत्युञ्जयः सूक्ष्मतनुः जगद्व्यापी जगद्गुरुः ॥ ९

व्योमकेशो महासेनजनकश्चारुविक्रमः ।
रुद्रो भूतपतिः स्थाणुरहिर्बुध्न्यो दिगम्बरः ॥ १०

अष्टमूर्तिरनेकात्मा सात्त्विकः शुद्धविग्रहः ।
शाश्वतः खण्डपरशुरजः पाशविमोचकः ॥ ११

मृडः पशुपतिर्देवो महादेवोऽव्ययो हरिः ।
पूषदन्तभिदव्यग्रो दक्षाध्वरहरो हरः ॥ १२

भगनेत्रभिदव्यक्तः सहस्राक्षः सहस्रपात् ।
अपवर्गप्रदोऽनन्तस्तारकः पर ईश्वरः ॥ १३

एवं श्रीशम्भुदेवस्य नाम्नामष्टोत्तरं शतम् ॥

—*—

## श्रीशिवाष्टोत्तरशतनामावलिः

ओं शिवाय नमः । महेश्वराय । शम्भवे । पिनाकिने । शशिशेखराय । वामदेवाय । विरूपाक्षाय । कपर्दिने । नीललोहिताय । शङ्कराय । शूलपाणये । खट्वाङ्गिने । विष्णुवल्लभाय । शिपिविष्टाय । अम्बिकानाथाय । श्रीकण्ठाय । भक्तवत्सलाय । भवाय । शर्वाय । त्रिलोकेशाय नमः २०

ओं शितिकण्ठाय नमः । शिवाप्रियाय । उग्राय । कपालिने । कामारये । अन्धकासुरसूदनाय । गङ्गाधराय । ललाटाक्षाय । कालकालाय । कृपानिधये । भीमाय । परशुहस्ताय । मृगपाणये । जटाधराय । कैलासवासिने । कवचिने । कठोराय । त्रिपुरान्तकाय । वृषाङ्काय । वृषभारूढाय नमः । ४०

ओं भस्मोद्धूलितविग्रहाय नमः। सामप्रियाय। स्वरमयाय। त्रयीमूर्तये। अनीश्वराय। सर्वज्ञाय। परमात्मने। सोमसूर्याग्निलोचनाय। हविर्यज्ञमयाय। सोमाय। पञ्चवक्त्राय। सदाशिवाय। विश्वेश्वराय। वीरभद्राय। गणनाथाय। प्रजापतये। हिरण्यरेतसे। दुर्धर्षाय। गिरीशाय। गिरिशाय नमः। ६०

ओं अनघाय नमः। भुजङ्गभूषणाय। भर्गाय। गिरिधन्वने। गिरिप्रियाय। कृत्तिवाससे। पुरारातये। भगवते। प्रमथाधिपाय। मृत्युञ्जयाय। सूक्ष्मतनवे। जगद्व्यापिने। जगद्गुरवे। व्योमकेशाय। महासेनजनकाय। चारुविक्रमाय। रुद्राय। भूतपतये। स्थाणवे। अहिर्बुध्न्याय नमः। ८०

ओं दिगम्बराय नमः। अष्टमूर्तये। अनेकात्मने। सात्त्विकाय। शुद्धविग्रहाय। शाश्वताय। खण्डपरशवे। अजाय। पाशविमोचकाय। मृडाय। पशुपतये। देवाय। महादेवाय। अव्ययाय। हरये। पूषदन्तभिदे। अव्यग्राय। दक्षाध्वरहराय। हराय। भगनेत्रभिदे नमः। १००

ओं अव्यक्ताय नमः। सहस्राक्षाय। सहस्रपदे। अपवर्गप्रदाय। अनन्ताय। तारकाय। पराय। ईश्वराय नमः। १०८

—*—

देवकृतं

# शिवाष्टोत्तरशतनामस्तोत्रम्

जय शम्भो विभो रुद्र स्वयम्भो जय शङ्कर।
जयेश्वर जयेशान जय सर्वज्ञ कामद॥ १

नीलकण्ठ जय श्रीद श्रीकण्ठ जय धूर्जटे।
अष्टमूर्तेऽनन्तमूर्ते महामूर्ते जयानघ॥ २

जय पापहरानङ्ग निःसङ्गानङ्गनाशन।
जय त्वं त्रिदशाधार त्रिलोकेश त्रिलोचन॥ ३

जय त्वं त्रिपथाधार त्रिमार्ग त्रिभिरूर्जित।
त्रिपुरारे त्रिधामूर्ते जयैक त्रिजटात्मक॥ ४

शशिशेखर शूलेश पशुपाल शिवाप्रिय।
शिवात्मक शिव श्रीद सुहृच्छ्रीशतनो जय॥ ५

सर्व सर्वेश भूतेश गिरिश त्वं गिरीश्वर।
जयोग्ररूप भीमेश भव भर्ग जय प्रभो॥ ६

जय दक्षाध्वरध्वंसिन् अन्धकध्वंस कारक।
रुण्डमालिन् कपालिंस्त्वं भुजङ्गाजिनभूषण॥ ७

दिगम्बर दिशां नाथ व्योमकेश चितां पते।
जयाधार निराधार भस्माधार धराधर॥ ८

देवदेव महादेव दैवतेशादिदैवत।
वह्निवीर्य जय स्थाणो जयायोनिजसंभव॥ ९

भव शर्व महाकाल भस्माङ्ग सर्पभूषण॥
त्र्यम्बक स्थपते वाचांपते भो जगतां पते॥ १०

शिपिविष्ट विरूपाक्ष जय लिङ्ग वृषध्वज।
नीललोहित पिङ्गाक्ष जय खट्वाङ्गमण्डन॥ ११

कृत्तिवास अहिर्बुध्न्य मृडानीश जटाम्बुभृत्।
जगद्भ्रातर्जगन्मातर्जगत्तात जगद्गुरो॥ १२

पञ्चवक्त्र महावक्त्र कालवक्त्र गजास्यभृत्।
दशबाहो महाबाहो महावीर्य महाबल॥ १३

अघोर घोरवक्त्र त्वं सद्योजात उमापते।
सदानन्द महानन्दानन्दमूर्ते जयेश्वर।। १४

एवमष्टोत्तरशतं नाम्नां देवकृतं तु ये।
शम्भोर्भक्त्या स्मरन्तीह शृण्वन्ति च पठन्ति च।। १५

न तापास्त्रिविधास्तेषां न शोको न रुजादयः।।
ग्रहगोचरपीडा च तेषां काऽपि न विद्यते।। १६

श्रीः प्रज्ञाऽऽरोग्यमायुष्यं सौभाग्यं भाग्यमुन्नतिः।
विद्या धर्मे मतिः शम्भोर्भक्तिस्तेषां न संशयः।। १७

—स्कन्दपुराणे सह्याद्रिखण्डतः।

—*—

# शिवाष्टोत्तरशतनामावलिः

ओं शम्भवे नमः। विभवे। रुद्राय। स्वयम्भुवे। शङ्कराय। ईश्वराय। ईशानाय। सर्वज्ञाय। कामदाय। नीलकण्ठाय। श्रीदाय। श्रीकण्ठाय। धूर्जटये। अष्टमूर्तये। अनन्तमूर्तये। महामूर्तये। अनघाय। पापहराय। अनङ्गाय। निस्सङ्गाय नमः। २०

ओं अनङ्गनाशनाय नमः। त्रिदशाधाराय। त्रिलोकेशाय। त्रिलोचनाय। त्रिपथाधाराय। त्रिमार्गाय। त्रिभिरूर्जिताय। त्रिपुरारये। त्रिधामूर्तये। एकाय। त्रिजटात्मकाय। शशिशेखराय। शूलेशाय। पशुपालाय। शिवाप्रियाय। शिवात्मकाय। शिवाय। श्रीदाय। सुहृदे। श्रीशतनवे नमः। ४०

ओं सर्वाय नमः। सर्वेशाय। भूतेशाय। गिरिशाय। गिरीश्वराय। उग्ररूपाय। भीमेशाय। भवाय। भर्गाय। प्रभवे। दक्षाध्वरध्वंसिने। अन्धकध्वंसकारकाय। रुण्डमालिने। कपालिने।

भुजङ्गाजिनभूषणाय। दिगम्बराय। दिशांनाथाय। व्योमकेशाय। चितांपतये। आधाराय नमः। ६०

ओं निराधाराय नमः। भस्माधाराय। धराधराय। देवदेवाय। महादेवाय। दैवताय। ईशादिदैवताय। वह्निवीर्याय। स्थाणवे। अयोनिजसंभवाय। भवाय। शर्वाय। महाकालाय। भस्माङ्गाय। सर्पभूषणाय। त्र्यम्बकाय। स्थपतये। वाचांपतये। जगतांपतये। शिपिविष्टाय नमः। ८०

ओं विरूपाक्षाय नमः। लिङ्गाय। वृषध्वजाय। नीललोहिताय। पिङ्गाक्षाय। खट्वाङ्गमण्डनाय। कृत्तिवाससे। अहये बुध्न्याय। मृडानीशाय। जटांबुभृते। जगद्भ्रात्रे। जगन्मात्रे। जगत्ताताय। जगद्गुरवे। पञ्चवक्त्राय। महावक्त्राय। कालवक्त्राय। गजास्यभृते। दशबाहवे। महाबाहवे नमः। १००

ओं महाबलाय नमः। अघोरघोरवक्त्राय। सद्योजाताय। उमापतये। सदानन्दाय। महानन्दाय। आनन्दमूर्तये। ईश्वराय नमः। १०८

—*—

# हरिहराष्टोत्तरशतनामस्तोत्रम्

गोविन्द माधव मुकुन्द हरे मुरारे
शम्भो शिवेश शशिशेखर शूलपाणे।
दामोदराच्युत जनार्दन वासुदेव
गङ्गाधरान्धकरिपो हर नीलकण्ठ॥ १

वैकुण्ठ कैटभरिपो कमठाब्जपाणे
भूतेश खण्डपरशो मृड चण्डिकेश।

विष्णो नृसिंह मधुसूतन चक्रपाणे।
गौरीपते गिरिश शङ्कर चन्द्रचूड ।। २

नारायणासुरनिबर्हण शार्ङ्गपाणे
मृत्युञ्जयोग्रविषमेक्षण कामशत्रो।
श्रीकान्त पीतवनाम्बुदनील शौरे
ईशान कृत्तिवसन त्रिदशैकनाथ ।। ३

लक्ष्मीपते मधुरिपो पुरुषोत्तमाद्य
श्रीकण्ठ दिग्वसन शान्त पिनाकपाणे।
आनन्दकन्द धरणीधर पद्मनाभ
सर्वेश्वर त्रिपुरसूदन देवदेव ।। ४

ब्रह्मण्यदेव गरुडध्वज शङ्खपाणे
त्र्यक्षोरगाभरण बालमृगाङ्कमौले।
श्रीराम राघव रमेश्वर रावणारे
भूतेश मन्मथरिपो प्रमथाधिनाथ ।। ५

चाणूरमर्दन हृषीकपते मुरारे
शूलिन् गिरीश रजनीशकलावतंस।
कंसप्रणाशन सनातन केशिनाश
भर्ग त्रिणेत्र भव भूतपते पुरारे ।। ६

गोपीपते यदुपते वसुदेवसूनो
कर्पूरगौर वृषभध्वज भालनेत्र।
गोवर्धनोद्धरण धर्मधुरीण गोप
स्थाणो त्रिलोचन पिनाकधर स्मरारे ।। ७

कृष्णानिरुद्ध करुणाकर कल्मषारे
विश्वेश्वर त्रिपथगार्द्रजटाकलाप।

अष्टोत्तराधिकशतेन सुचारुनाम्नां
सन्दर्भितां ललितरत्नकदम्बकेन।
सन्नायकां दृढगुणां निजकण्ठगां यः
कुर्यादिमां स्रजमहो स यमं न पश्येत्॥ ८

—*—

## हरिहराष्टोत्तरशतनामावलिः।

ओं गोविन्दाय नमः। माधवाय। मुकुन्दाय। हरये। मुरारये। शम्भवे। शिवाय। ईशाय। शशिशेखराय। शूलपाणये। दामोदराय। अच्युताय। जनार्दनाय। वासुदेवाय। गङ्गाधराय। अन्धकरिपवे। हराय। नीलकण्ठाय। वैकुण्ठाय। कैटभरिपवे नमः। २०

ओं कमठाय। अब्जपाणये। भूतेशाय। खण्डपरशवे। मृडाय। चण्डिकेशाय। विष्णवे। नृसिंहाय। मधुसूदनाय। चक्रपाणये। गौरीपतये। गिरिशाय। शङ्कराय। चन्द्रचूडाय। नारायणाय। असुरनिबर्हणाय। शार्ङ्गपाणये। मृत्युञ्जयाय। उग्राय। विषमेक्षणाय नमः। ४०

ओं कामशत्रवे नमः। श्रीकान्ताय। पीतवसनाय। अम्बुदनीलाय। शौरये। ईशानाय। कृत्तिवसनाय। त्रिदशैकनाथाय। लक्ष्मीपतये। मधुरिपवे। पुरुषोत्तमाय। आद्याय। श्रीकण्ठाय। दिग्वसनाय। शान्ताय। पिनाकपाणये। आनन्दकन्दाय। धरणीधराय। पद्मनाभाय। सर्वेश्वराय नमः। ६०

ओं त्रिपुरसूदनाय नमः। देवदेवाय। ब्रह्मण्यदेवाय। गरुडध्वजाय। शङ्खपाणये। त्र्यक्षाय। उरगाभरणाय। बालमृगाङ्कमौलये। श्रीरामाय। राघवाय। रमेश्वराय। रावणारये।

भूतेशाय । मन्मथरिपवे । प्रमथाधिनाथाय । चाणूरमर्दनाय । हृषीकपतये । मुरारये । शूलिने । गिरीशाय नमः । ८०

ओं रजनीशकलावतंसाय नमः । कंसप्रणाशनाय । सनातनाय । केशिनाशाय । भर्गाय । त्रिणेत्राय । भवाय । भूतपतये । पुरारये । गोपीपतये । यदुपतये । वसुदेवसूनवे । कर्पूरगौराय । वृषभध्वजाय । भालनेत्राय । गोवर्धनोद्धरणाय । धर्मधुरीणाय । गोपाय । स्थाणवे । त्रिलोचनाय नमः । १००

ओं पिनाकधराय नमः । स्मरारये । कृष्णाय । अनिरुद्धाय । कमलाकराय । कल्मषारये । विश्वेश्वराय । त्रिपथगार्द्रजटाकलापाय नमः । १०८

—*—

# सोमास्कन्दाष्टोत्तरशतनामावलिः

दक्षालम्बितवामनिद्रितपदं कृष्णामृगं चाभयं
टङ्कश्चादयितं घरं च कटकं बिभ्राणकं वामके ।
वामालम्बितनिद्रितान्यपदया देव्यायुतं मध्यके
स्कन्देनाब्जकरद्वयेन सहितं सोमागुहेशं भजे ।।

ओं सोमास्कन्दाय नमः । जगन्नाथाय । कमलापुरनायकाय । कल्याणवेषाय । कारुण्यमूर्तये । कनकपुष्कलाय । कल्हारमालिकाय । कुसुमप्रियाय । रत्नसिंहासनारूढाय । राजराजप्रियाय । राज्यदायिने । राज्यशिखामणये । रम्याय । रत्नप्रियाय । रक्षणचतुराय । नटनायकनायकाय । कन्दर्पनटनाय । शम्भवे । वीरखड्गविलासनाय । ताटङ्कसुन्दराय नमः । २०

ओं रथसुन्दराय नमः । सौम्याय । सर्वसौभाग्यवर्धनाय । सान्द्रकर्पूरधवलाय । कृष्णगन्धानुलेपनाय । वल्मीकमूलनिलयाय । पराशक्तिपरिग्रहाय । देवतीर्थप्रियाय । देवाय । आढकक्षेत्रम हिताय । दिव्याय । देवार्चिताय । देवसिद्धगन्धर्वसेविताय । आनन्दरूपिणे । आनन्ददायिने । सर्वनिषेविताय । वेदान्तविमलाय । अविद्या-वारकाय । पार्वतीसुताय । गुहताताय नमः । ४०

ओं गुरुश्रेष्ठाय नः । गुणपाय । गुणवर्जिताय । सत्यज्ञानमयाय । निर्मलाय । निरहङ्कृतये । शान्ताय । सर्वगताय । संहारवटाय । कलङ्करहिताय । काव्याय । त्रिणेत्राय । कम्बुकण्ठाय । कलाधराय । कृतज्ञाय । नीतिशास्त्ज्ञाय । निराकराय । महाप्रभवे । सदानन्दाय । सदाध्येयाय नमः । ६०

ओं त्रिजगद्गुरवे नमः । शूलपाणये । शुभाकाराय । शुद्धाय । सुन्दरपूजिताय । तृप्ताय । तरुणरूपाय । कमलायतलोचनाय । वीथीविटङ्काय । विशदाय । विपुलांसाय । विशारदाय । विश्वार्थदाय । विरूपाक्षाय । विश्वगोप्त्रे । विभावसवे । सदापूज्याय । सदास्तोतव्याय । ईश्वराय । ईशानाय नमः । ८०

ओं जगदीशाय । जन्मर्क्षकलिनाशनाय । कालान्तकाय । कामारये । त्रिपुरारये । त्रिलोचनाय । मखध्वंसिने । महायोगिने । मत्तगर्वनिशाकराय । ज्ञानदाय । मोक्षदायिने । दुष्टदूराय । दिवाकराय । अष्टमूर्तये । अनन्ताय । प्रभामण्डलमध्यगाय । मन्दस्मितमुखाय । मान्द्याय । मङ्गलाङ्गाय । महातनवे नमः । १००

ओं पीताम्बराय नमः । महत्सूक्ष्माय । सत्यसन्धाय । सनातनाय । त्यागराजाय । महाराजाय । विष्णुपाद्याय । विराण्मयाय नमः (१०८) सोमास्कन्दमूर्तये नमः ।

—*—

# श्री नटेशाष्टोत्तरशतनामावलिः

नटेश्वरं सुन्दरवन्दिताङ्घ्रिं जटेन्दुगङ्गालसदुत्तमाङ्गम्।
घटोद्भवादिस्तुतवैभवाङ्घ्रिं चिदम्बरेशं हृदि भावयामि ॥

ध्यायेत्कोटिरविप्रभं त्रिणयनं शीतांशुगङ्गाधरं
दक्षाङ्घ्रिस्थित वामकुञ्चितपदं शार्दूलचर्मोद्धृतम्।
वह्निं डोलमथाभयं डमरुकं वामे स्थितां श्यामलां
कल्हारं जपसृक् शुकां कटिकरां देवीं सभेशीं सदा ॥

ओं चिदम्बरेश्वराय नमः। हेमसभेशाय। चित्सभेश्वराय। चिदम्बसभानाथाय। चिदम्बरसभापतये। चिदम्बरपुराधीशाय। चिदम्बरसभानटाय। सभेश्वराय। सभामूर्तये। ससम्राजे। सदसस्पतये। चिद्रूपाय। नटेशाय। नटनायकाय। सभामणये। सभादीप्ताय। नटराजे। ताण्डवेश्वराय। पुण्डरीकपुराधीशाय। पुण्डरीकपुरेश्वराय नमः। २०

ओं पुण्डरीकरुचये नमः। वन्द्याय। पुण्डरीकाक्षसेविताय। तिल्वरुद्राय। महारुद्राय। नर्तकाय। नृत्तसुन्दराय। पञ्चाक्षराय। परस्मैज्योतिषे। सुन्दरानन्दताण्डवाय। आनन्दनटनाधीशाय। सच्चिदानन्दविग्रहाय। व्योमव्योम्ने। व्योमकेशाय। चिन्महाव्योमताण्डवाय। अम्बराधीश्वराय। हंसाय। कुञ्चिताङ्घ्रये। चिदम्बराय। तिल्ववासाय नमः। ४०

ओं चिदीशाय नमः। विराजे। तिल्ववनाधिपाय। त्रैलोक्यसुन्दराय। तिल्ववनाय। तिल्वपुरीश्वराय। व्याघ्रचर्मधराय। व्याघ्रपुरेशाय। व्याघ्रपादप्रियाय। कृपानिधये। महाकालाय। व्याघ्रपादप्रपूजिताय। मन्त्रविग्रहाय। ओङ्काराय। सिंहवर्मप्रपूजिताय। जटाधराय। ललाटाक्षाय। पतञ्जलिवरप्रदाय। अपस्माररहराय। सर्पभूषणाय नमः। ६०

ओं फणिराट्प्रियाय नमः । महाकामेश्वराय । वज्रेश्वराय । प्रासादविग्रहाय । आनन्दताण्डवाय । रत्नपादाय । सुन्दरताण्डवाय । हरिप्रियाय । हराय । शम्भवे । ईश्वराय । जैमिनिप्रियाय । मणिनूपुरपादाय । श्रीचक्रवासाय । उमापतये । त्रिलोचनाय । शूलपाणये । भूतेशाय । वृषभध्वजाय । श्रीचक्रप्रियाय नमः । ८०

ओं उग्राङ्गाय नमः । त्रिपुराय । त्रिपुरेश्वराय । मन्त्रमूर्तये । सभाचक्राय । मन्त्रराजे । चक्रविग्रहाय । परप्रकाशाय । शिवकामिसुन्दराय । परात्पराय । परमेशाय । सर्वेशाय । श्रीमदभ्रसभेश्वराय । महेश्वराय । महादेवाय । शङ्कराय । चन्द्रशेखराय । ईशानाय । तत्पुरुषाय । अघोराय नमः । १००

ओं वामदेवाय नमः । सद्योजाताय । सदाशिवाय । भुवनेशाय । विश्वनाथाय । शिवाय । त्रिपुरारये । सुन्दराय नमः । १०८

—*—

## श्रीवीरभद्राष्टोत्तरशतनामावलिः

ओं वीरभद्राय नमः । महाशूराय । रौद्राय । रुद्रावतारकाय । श्यामाङ्गाय । उग्रदंष्ट्राय । भीमनेत्राय । जितेन्द्रियाय । ऊर्ध्वकेशाय । भूतनाथाय । खड्गहस्ताय । त्रिविक्रमाय । विश्वव्यापिने । विष्णुनाथाय । विष्णुचक्रविभञ्जनाय । भद्रकालीपतये । भद्राय । भद्राक्षाभरणान्विताय । भानुदन्तभिदे । उग्राय नमः । २०

ओं भगवते नमः । भावगोचराय । चण्डमूर्तये । चतुर्बाहवे । चतुराय । चन्द्रशेखराय । सत्यप्रतिज्ञाय । सर्वात्मने । सर्वसाक्षिणे । निरामयाय । नित्याय । निर्धूतपापौघाय । निर्विकल्पाय । निरञ्जनाय । भारतीनासिकाच्छेदाय । भवरोगमहाभिषजे । भक्तैकरक्षाय । बलवते । भस्मोद्धूलितविग्रहाय । दक्षारये नमः । ४०

ओं धर्ममूर्तये नमः । दैत्यसंघभयङ्कराय । पात्रहस्ताय । पावकाक्षाय । पद्मजाक्षादिवन्दिताय । मखान्तकाय । महातेजसे । महाभयनिवारणाय । महावीरगणाध्यक्षाय । महाघोरनृसिंहजिते । निश्वासमारुतोद्धूतकुलपर्वतसञ्चयाय । दन्तनिष्पेषणारावमुखरीकृतदिक्तटाय । पादसङ्घट्टनोद्भ्रान्तशेषशीर्षसहस्रकाय । भानुकोटिप्रभाभास्वन्मणिकुण्डलमण्डिताय । शेषभूषाय । चर्मवाससे । चारुहस्तोज्ज्वलत्तनवे। उपेन्द्रेन्द्रयमादित्यदेवानामङ्गरक्षकाय । पट्टिसप्रासपरशुगदाद्यायुधशोभिताय । ब्रह्मादिदेव-दुष्प्रेक्ष्यप्रभाशुंभत्किरीटधृते नमः । ६०

ओं कूष्माण्डग्रहवेतालमारीगणविभञ्जनाय नमः । क्रीडाकन्दुकिताजाण्डभाण्डकोटिविराजिताय । शरणागतवैकुण्ठब्रह्मेन्द्रामररक्षकाय । योगीन्द्रहृत्पयोजातमहाभास्करमण्डलाय । सर्वदेवशिरोरत्नसंघृष्टमणिपादुकाय । ग्रैवेयहारकेयूरकाञ्ची कटकभूषिताय । वागतीताय । दक्षहराय । वह्निजिह्वानिकृन्तनाय । सहस्रबाहवे । सर्वज्ञाय । सच्चिदानन्दविग्रहाय । भयाह्वयाय। भक्तलोकारातितीक्ष्णविलोचनाय । कारुण्याक्षाय । गणाध्यक्षाय गर्वितासुरदर्पहृते । संवत्सराय । सदानन्दाय । सर्वाभीष्टफलप्रदाय नमः । ८०

ओं नूपुरालङ्कृतपदाय नमः । व्यालयज्ञोपवीतकाय । भगनेत्रहराय । तीक्ष्णबाहवे । बन्धविमोचकाय । तेजोमयाय । कवचाय । भृगुश्मश्रुविलुंपकाय । यज्ञपूरुषशीर्षघ्नाय । यज्ञारण्यदवानलाय । भक्तैकवत्सलाय । भगवते । सुलभाय । शाश्वताय । निधये । सर्वसिद्धिकराय । दान्ताय । सकलागमशोभिताय । भुक्तिमुक्तिप्रदाय । देवाय नमः । १००

ओं सर्वव्याधिनिवारकाय नमः । अकालमृत्युसंहर्त्रे । कालमृत्युभयङ्कराय । ग्रहाकर्षणनिर्बन्धमारणोच्चाटनप्रियाय । परतन्त्रविनिर्बन्धाय । परमात्मने । परात्पराय । स्वमन्त्रयन्त्र-तन्त्रौघपरिपालनतत्पराय । पूजकश्रेष्ठशीघ्रवरप्रदाय । श्री वीरभद्राय नमः ।



# शिवचण्डेश्वराष्टोत्तरशतनामावलिः

नीलकण्ठपदाम्भोज परिस्फुरितमानस।
शम्भोः सेवाफलं देहि चण्डेश्वर नमोऽस्तुते।।

शिवाञ्जलिकृतं चण्डं शिवध्यानपरायणम्।
शिवार्चाफलदातारं शिवचण्डेश्वरं भजे।।

ओं चण्डेश्वराय नमः । महाचण्डाय । प्रचण्डाय । ध्यानमानसाय । ब्राह्मणाय । वरदाय । विद्रवे । धृतचण्डाय । शिवप्रियाय । ज्ञानदाय । ज्ञाननेत्रसम्भूताय । सर्पभूषणाय । भस्मोद्धूलिताय । शिवभस्मोद्धूलिताय । शिवभक्ताय । भव्याय । भवाय । करुणाकराय । शीलाय । वैतनिकाय नमः । २०

ओं सेनाय नमः । शान्तमानसाय । फणिमालाधराय । फणिकङ्कणधारणाय । जटाधराय । जगत्सेनाय । विप्रप्रियाय । विशिष्टाय । विप्रशान्ताय । विश्वदंष्ट्रे (द्रष्ट्रे) । विश्वदर्शनाय । मूर्तिमते । व्यवस्थारहिताय । वेदविदे । सुन्दराय । विद्युत्प्रभाय । शुभकराय । शङ्करप्रियाय । शङ्कप्रीताय । टङ्कहस्ताय नमः । ४०

ओं अञ्जलिहस्ताय नमः । उमाभक्ताय । अक्षरप्रीताय । जयिने । एकाग्रचिन्तकाय । शुभङ्कराय । मन्त्रमूर्तये ।

मानसार्चापराय। सान्निध्याय। शर्वाय। शान्ताय। शङ्करप्रियाय। शरत्रिकाय। साम्बस्मरणाय। सामान्याय। प्रशान्तमानसाय। केतु(त)शरण्याय। सामप्रदाय। द्विनेत्राय। दिव्यज्ञानिने नमः (६०)

ओं दिव्यसुन्दराय नमः। देवप्रियाय। दैवचिन्त्याय। निष्कलङ्काय। निराकाराय। ईश्वरैक्याय। निरञ्जनाय। निरज्ञानाय। भोगरत्नाय। शिवपूजाप्रियाय। ईशानाय। शम्भुपार्श्वस्थिताय। सूक्ष्माय। सूक्ष्मदेहाय। हरप्रियाय। दण्डहस्ताय। शिवकलाध्यायिने। भस्मनिधये। भस्मधृते। परिचराय नमः। ८०

ओं परिव्राजे नमः। वसवे। शिवपाद्यप्रियाय। वभ्र्याय। रूपिणीप्रियाय। कलिचण्डाय। कालिकाय। कुसुमप्रियाय। निर्मलाय। नियताय। नित्याय। निरामयाय। निद्राज्ञानाय। निरातङ्काय। नियमप्रियाय। ध्येयाय। ध्यानरूपाय। नित्यचण्डाय। निष्कलङ्काय। मोक्षज्ञानप्रदाय नमः। १००

ओं वज्रकेशाय नमः। ध्वनिज्ञानिने। शिवनिर्माल्यभोक्त्रे। शिवनिर्माल्यधारणाय। शिवार्चाफलदात्रे। शिवभक्तिधुरन्धराय। चण्डेश्वराय। शिवचण्डेश्वराय नमः। १०८

—★—

## श्री नन्दिकेशाष्टोत्तरशतनामावलिः

नन्दिकेश महाभाग शिवध्यानपरायण।
देवदेवस्य सेवार्थं अनुज्ञां दातुमर्हसि।

बिभ्राणं परशुं मृगं करतलैरीशप्रणामाञ्जलिं
भस्मोद्धूलनपाण्डरं शशिकलागङ्गाकपर्दोज्ज्वलम्।
पर्याय त्रिपुरान्तकं प्रमथपश्रेष्ठं गणं दैवतं
ब्रह्मेन्द्राच्युतपूजिताङ्घ्रिकमलं श्रीनन्दिकेशं भजे॥

ओं नन्दिकेशाय नमः। ब्रह्मरूपिणे। शिवध्यानपरायणाय। तीक्ष्णशृङ्गाय। वेदपादाय। विरूपाय। वृषभाय। तुङ्गशैलाय। देवदेवाय। शिवप्रियाय। विराजमानाय। नटनाय। अग्निरूपाय। धनप्रियाय। सितचामरधारिणे। वेदाङ्गाय। कनकप्रियाय। कैलासवासिने। देवाय। स्थितपादाय नमः। २०

ओं श्रुतिप्रियायनमः। श्वेतोपवीतिने। नाट्यनन्दकाय। किङ्किणीधराय। मत्तशृङ्गिणे। हाटकेशाय। हेमभूषणाय। विष्णुरूपिणे। पृथ्वीरूपिणे। निधीशाय। शिववाहनाय। गुडप्रियाय। चारुहासाय। शृङ्गिणे। नवतृणप्रियाय। वेदसाराय। मन्त्रसाराय। प्रत्यक्षाय। करुणाकराय। शीघ्राय नमः। ४०

ओं ललामकलिकाय नमः। शिवयोगिने। जलाधिपाय। चारुरूपाय। वृषेशाय। सोमसूर्याग्निलोचनाय। सुन्दराय। सोमभूषाय। सुवक्त्राय। कलिनाशनाय। सुप्रकाशाय। महावीर्याय। हंसाय। अग्निमयाय। प्रभवे। वरदाय। रुद्ररूपाय। मधुराय। कामिकप्रियाय। विशिष्टाय नमः। ६०

ओं दिव्यरूपाय नमः। उज्ज्वलिने। ज्वालनेत्राय। संवर्ताय। कालाय। केशवाय। सर्वदैवताय। श्वेतवर्णाय। शिवासीनाय। चिन्मयाय। शृङ्गपट्टाय। श्वेतचामरभूषिताय। देवराजाय। प्रभानन्दिने। पण्डिताय। परमेश्वराय। नीरूपाय। निराकाराय। छिन्नदैत्याय। नासासूत्रिणे नमः। ८०

ओं अनन्तेशाय नमः । तिलतण्डुलभक्षणाय । वारनन्दिने । सरसाय । विमलाय । पट्टसूत्राय । कालकण्ठाय । शैलादिने । शिलादनसुनन्दनाय । कारणाय । श्रुतिभक्ताय । वीरघण्टाधराय । धन्याय । विष्णुनन्दिने । शिवज्वालाग्राहिणे । भद्राय । अनघाय । वीराय । ध्रुवाय । धात्रे नमः । १००

ओं शाश्वताय नमः । प्रदोषिप्रियरूपिणे । वृषाय । कुण्डलधृते । भीमाय । सितवर्णस्वरूपिणे । सर्वात्मने । सर्वविख्याताय नमः । १०८



# दुर्गाष्टोत्तरशतनामावलिः

ओं श्रियै नमः । उमायै । भारत्यै । भद्रायै । शर्वाण्यै । विजयायै । जयायै । वाण्यै । सर्वगतायै । गौर्यै । वाराह्यै । कमलप्रियायै । सरस्वत्यै । कमलायै । मायायै । मातङ्ग्यै । अपरायै । अजायै । शाकंभर्यै । शिवायै नमः । २०

ओं चण्डयै नमः । कुण्डल्यै । वैष्णव्यै । क्रियायै । श्रियै । ऐन्द्र्यै । मधुमत्यै । गिरिजायै । सुभगायै । अम्बिकायै । तारायै । पद्मावत्यै । हंसायै । पद्मनाभसहोदर्यै । अपर्णायै । ललितायै । धात्र्यै । कुमार्यै । शिखिवाहिन्यै । शाम्भव्यै नमः । ४०

ओं सुमुख्यै नमः । मैत्र्यै । त्रिनेत्रायै ।विश्वरूपिण्यै । आर्यायै । मृडान्यै । ह्रींकार्यै । क्रोधिन्यै । सुदिनायै । अचलायै । सूक्ष्मायै । परात्परायै । शोभायै । सर्ववर्णायै । हरप्रियायै । महालक्ष्म्यै । महासिद्ध्यै । स्वधायै । स्वाहायै । मनोन्मन्यै नमः । ६०

ओं त्रिलोकपालिन्यै नमः । उद्भूतायै । त्रिसन्ध्यायै । त्रिपुरान्तक्यै । त्रिशक्त्यै । त्रिपदायै । दुर्गायै । ब्राह्म्यै । त्रैलोक्यवासिन्यै । पुष्करायै । अत्रिसुतायै । गूढायै । त्रिवर्णायै । त्रिस्वरायै । त्रिगुणायै । निर्गुणायै । सत्यायै । निर्विकल्पायै । निरञ्जन्यै । ज्वालिन्यै नमः । ८०

ओं मालिन्यै नमः । चर्चायै । क्रव्यादोपनिबर्हिण्यै । कामाक्ष्यै । कामिन्यै । कान्तायै । कामदायै । कलहंसिन्यै । सलज्जायै । कुलजायै । प्राज्ञायै । प्रमायै । मदनसुन्दर्यै । वागीश्वर्यै । विशालाक्ष्यै । विराड्रूपायै । सुमङ्गल्यै । काल्यै । महेश्वर्यै । चण्ड्यै नमः १००

ओं भैरव्यै नमः । भुवनेश्वर्यै । नित्यायै । सानन्दविभवायै । सत्यज्ञानायै । तमोपहायै । महेश्वरप्रियकर्यै । महात्रिपुरसुन्दर्यै नमः १०८



# पराष्टोत्तरशतनामस्तोत्रम्

अस्य श्रीपराष्टोत्तरशतनामस्तोत्रमहामन्त्रस्य, सच्चिदानन्दभैरव ऋषिः । अनुष्टुप्छन्दः । श्रीपराम्बा देवता । हंबीजं सः शक्तिः । सोहं कीलकम् । श्रीपराम्बाप्रसादसिद्ध्यर्थे जपे विनियोग; । ओं ह्रीं श्रीं मां ह्रीं क्रों स्वस्वरूपिण्यै हंसः सोहं नमः स्वाहा इति मूलेन करहृदयादि न्यासः । ध्यानम्—

परां परात्परां पूर्णां सच्चिदानन्दरूपिणीम् ।
अन्तर्मुखसमाराध्यां स्वस्वरूपां समाश्रये ॥

श्रीवाणीमानिता माता शृङ्गाररुचिरुज्ज्वला ।
शृङ्गारमण्डनप्रीता चतुष्पदनिवासभूः ॥ १

श्यामलाङ्गी मदोन्मत्ता श्यामा रत्नाङ्ग भूषणी।
ब्रह्मविष्णुमहेशादिपूजिता भगमालिनी ॥ २

परब्रह्मात्मिका शक्तिः बालाम्बा भव्यभाविता।
सप्तकोटिमहामन्त्रदीपिका रक्षभूमिका ॥ ३

सङ्गीतलोला सावित्री शब्दब्रह्ममयी परा।
षट्पद्मभ्रमरी सामवेदरूपा सरस्वती ॥ ४

षट्चक्र मध्यनिलया संपूर्णा सकलेश्वरी।
कुलेश्वरी कुलान्तःस्था कुल्ला कुलपताकिनी ॥ ५

कामेश्वरी कामकला कालिका कामकोटिका।
काकिन्यादिमहाशक्तिरूपिणी कामदेवता ॥ ६

पञ्चकृत्यपरेशानी परब्रह्मस्वरूपिणी।
तार्तीया तत्त्वभूषाढ्या तापसानन्ददायिनी ॥ ७

चक्रराजेश्वरी चारुः चतुर्थस्वरविग्रहा।
अष्टत्रिंशत्कलारूपा मण्डलत्रयमध्यगा ॥ ८

चतुर्णवतिभोगा च चराचरमयी शिवा।
सर्वशक्तिविलासैक्य भूमिः सर्वाङ्ग सुन्दरी ॥ ९

पञ्चविद्यात्मिका पञ्चावस्थातीता परात्परा।
स्वच्छन्दानन्दसन्दोहा स्वप्रकाशा शिवा परा ॥ १०

त्रिनेत्रपूरिता त्रिस्था त्रिकोणान्तरदीपिका।
त्रिपुरा त्रिगुणातीता त्रिजगज्जनमोहिनी ॥ ११

प्रेतासनप्रिया सारा भीमा भङ्गभिदापहा।
महामाया मधुप्रीता मदिराक्षी मदालसा ॥ १२

महेशमग्ना मातङ्गी मन्मथाराध्य पादुका।
श्रीमती चिदचिद्रूपा ह्रीमती हेतुवर्जिता।। १३

क्लीङ्कारी गिरिजा गुह्या हैमवत्यम्बिका शुभा।
मालिनी दीपिनो पञ्चरत्नसिंहस्वरूपिणी।। १४

सर्वोन्नताऽनुत्तराख्या षडाम्नाय प्रकीर्तिता।
षड्गुणैश्वर्यसम्पन्ना षड्विधैक्यपरापरा।। १५

नवचक्रेश्वरी पूज्या नवनाथात्मभाविता।
नवमुद्राञ्चिता नानानामरूपविलक्षणा।। १६

दुरितेन्धनदावाग्निर्दुर्गा दुर्गतिहारिणी।
काली कराली कङ्काली कालरात्रिः कपालिनी।। १७

कबलीकृतनिःशेषा तत्त्वज्ञानस्वरूपिणी।
एवं सर्वातिशायिन्याः नाम्नामष्टोत्तरं शतम्।। १८

परायाः पठितं येन स याति परमां गतिम्।
त्रिसन्ध्यं यः पठे द्विद्वान् भोगमोक्षप्रदं नृणाम्।। १९



# पराष्टोत्तरशतनामावलिः

ओं श्रीवाणीमानितायै। मात्रे। शृङ्गाररुचये। उज्ज्वलायै। शृङ्गारमण्डनप्रीतायै। चतुष्पदनिवासभुवे। श्यामलांग्यै। मदोन्मत्तायै। श्यामायै। रत्नाङ्गभूषण्यै। ब्रह्मविष्णुमहेशादि-पूजितायै। भगमालिन्यै। परब्रह्मात्मिकायै शक्त्यै। बालाम्बायै। भव्यभावितायै। सप्तकोटिमहामन्त्रदीपिकारक्षभूमिकायै। संगीतलोलायै। सावित्र्यै। शब्दब्रह्ममय्यै। परायै नमः। २०

ओं षट्पदभ्रमर्यै नमः । सामवेदरूपायै । सरस्वत्यै । षट्चक्रमध्यनिलयायै । संपूर्णायै । सकलेश्वर्यै । कुलेश्वर्यै । कुलान्तःस्थायै। कुल्लायै। कुलपताकिन्यै। कामेश्वर्यै। कामकलायै। कालिकायै। कामकोटिकायै। काकिन्यादि महाशक्तिरूपिण्यै। कामदेवतायै। पञ्चकृत्यपरेशान्यै। परब्रह्मस्वरूपिण्यै। तार्तीयायै। तत्त्वभूषाढ्यायै नमः। ४०

ओं तापसानन्ददायिन्यै नमः । चक्रराजेश्वर्यै। चारवे । चतुर्थस्वरविग्रहायै। अष्टत्रिंशत्कलारूपायै। मण्डलत्रयमध्यगायै। चतुर्णवतिभोगायै। चराचरमय्यै। शिवायै। सर्वशक्तिविलासैक्य-भूमये। सर्वाङ्गसुन्दर्यै। पञ्चविद्यात्मिकायै। पञ्चावस्थातीतायै। परात्परायै। स्वच्छन्दानन्दसन्दोहायै। स्वप्रकाशायै। शिवायै। परायै। त्रिनेत्रपूरितायै। त्रिस्थायै नमः। ६०

ओं त्रिकोणान्तरदीपिकायै। त्रिपुरायै। त्रिगुणातीतायै। त्रिजगज्जनमोहिन्यै। प्रेतासनप्रियायै। सारायै। भीमायै। भङ्गभिदापहायै। महामायायै। मधुप्रीतायै। मदिराक्ष्यै। मदालसायै। महेशमग्रायै। मातङ्ग्यै। मन्मथाराध्यपादुकायै। श्रीमत्यै। चिदचिद्रूपायै। ह्रीमत्यै। हेतुवर्जितायै। क्लींकार्यै नमः। ८०

ओं गिरिजायै नमः। गुह्यायै। हैमवत्यै। अम्बिकायै। शुभायै। मालिन्यै। दीपिन्यै। पञ्चरत्नसिंहस्वरूपिण्यै। सर्वोन्नतायै। अनुत्तराख्यायै। षडाम्नायप्रकीर्तितायै। षड्गुणैश्वर्य संपन्नायै। षड्विधैक्यपरायणायै। नवचक्रेश्वर्यै। पूज्यायै। नवनाथात्मभावितायै। नवमुद्राश्रितायै। नानानामरूप-विलक्षणायै। दुरितेन्धनदावाग्नये। दुर्गायै नमः। १००

ओं दुर्गतिहारिण्यै नमः । काल्यै । कराल्यै । कङ्काल्यै । कालरात्र्यै । कपालिन्यै । कबलीकृतनिःशेषायै । तत्त्वज्ञान-स्वरूपिण्यै नमः । १०८

—★—

# भुवनेश्वर्यष्टोत्तरशतनामस्तोत्रम्

अस्य श्रीभुवनेश्वर्यष्टोत्तरशतनामस्तोत्रमहामन्त्रस्य ईश्वरो भगवानृषिः, अनुष्टुप् छन्दः । श्री भुवनेश्वरी देवता । ऐं बीजं, ह्रीं शक्तिः, स्वाहा कीलकम् । श्री भुवनेश्वरीप्रसादसिद्ध्यर्थे नामपरायणे विनियोगः । ओं ह्रां ह्रीं ह्रूं ह्रैं ह्रः इति करषडङ्गन्यासौ । भूर्भुवस्सुवरोमिति दिग्बन्धः । ध्यानम्—

या माणिक्यमनोज्ञमौलिरमला सिन्दूरभासान्विता
तारानायकशेखरी त्रिणयनी पीनस्तनोद्भासिता ।
बन्धूकप्रसवारुणाम्बरधरा मार्ताण्डकोट्युज्ज्वला
सा दद्याद् भुवनेश्वरी भगवती श्रेयांसि भूयांसि नः ॥

वन्दे रत्ननिबन्ध हैममकुटां रत्नांचितोल्लासिनीं
भाराक्षीमभयाष्टबाहुमसृणाब्जातप्रसन्नाननाम् ।
बालार्कप्रतिभासकुण्डलधरां केयूरहारोज्ज्वलां
शोणाङ्गीं भुवनेश्वरीं हरिहरब्रह्मादिभिर्वन्दिताम् ॥

माया कुण्डलिनी क्रिया मधुमती काली कला मालिनी
मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी ।
शक्तिः शङ्करवल्लभा त्रिणयना वाग्वादिनी भैरवी
पायान्मां त्रिपुरा परात्परमयी माता कुमारीत्यपि ॥

आरक्तोपान्तनेत्रां मणिमकुटवतीं रत्नताटङ्करम्यां
हस्ताम्भोजेषु पाशाङ्कुशमदनधनुः सायकैर्विस्फुरन्तीम्।
आपीनोत्तुङ्गवक्षोरुहमणिविलसत्तारहारोज्ज्वलाङ्गीं
अम्बामम्भोजहस्तामरुणकवचितामीश्वरीमाश्रयामः॥

नामाष्टशतकं वक्ष्ये उमायाः शृणु षण्मुख।
उमा संमोहिनी देवी सुन्दरी भुवनेश्वरी।
एकाक्षरी महामाया एकाङ्गी एकनायिका॥ १

बहुरूपा महारूपा स्थूलसूक्ष्मपरायणा।
बिन्दुस्वरूपा निर्वाणी संग्रामजयनायिका॥ २

महोन्नता पराशक्तिः योगिनी पापनाशिनी।
आपत्कालदयारूपा वैष्णवी भद्रकालिका॥ ३

भक्तप्रिया महाघोरा हरिब्रह्मादिपूजिता।
शिवरूपा विष्णुरूपा ब्रह्मरूपा सरस्वती॥ ४

त्रिशूलिनी डमरुक पाशाङ्कुशधरा जया।
खड्गखेटधरा देवी खड्गिनी चक्रधारिणी॥ ५

दुर्गा देवी जगद्धात्री समस्तशिवनायिका।
पुराणी पुण्यरूपा च पवित्रा भद्रमङ्गला॥ ६

रुद्राणी पार्वतीन्द्राणी शङ्करार्धशरीरिणी।
नारायणी महालक्ष्मीर्महादेवी सुमङ्गला॥ ७

अकारादिक्षकारान्ता अष्टत्रिंशत्कलात्मिका।
मातृकासप्तरूपा च शरीरोत्पत्तिकारिणी॥ ८

सकलप्राण भूतेशी सृष्टिस्थित्यन्तकारिणी।
अघोरात्मा महारौद्री महत्ता मूलनायिका॥ ९

महाज्ञेया महाज्ञानिनीन्द्ररूपा महेश्वरी।
ईशानी लोकमाता च तत्पुर्षी विन्ध्यवासिनी ॥ १०

सद्योजाता कलारूपा सोमसूर्याग्निलोचना।
गुणत्रया क्रियारूपा धात्री त्रिपुरभैरवी ॥ ११

सिंहयाना च योगीन्द्रा धर्मरूपा सुवासिनी।
परब्रह्मनिवासा च बहुरूपा च धारिणी ॥ १२

हरपत्नी महालक्ष्मीर्ब्रह्मरूपा बहुप्रदा।
त्रिशूलडमरूशक्तिपाशाङ्कुशसुदर्शना ॥ १३

खड्गखेटकखट्वाङ्गशूलिनी शङ्खधारिणी।
अरूपा कामरूपा च तपस्वी कालरूपिणी ॥ १४

षोडशी त्रिपुरादेवी ह्रींकारी परमेश्वरी।
कुमारी पिङ्गली चैव वारुणी मदमोहिता ॥ १५

महेशी विश्वमाता च नमिता भवनायिका।
एवं चाष्टौ शतं नाम्नां स्तोत्रमीश्वरभाषितम् ॥ १६

भक्त्या यस्तु पठेन्नित्यं दारिद्र्यं नास्त्यसंशयः।
सर्वपापैः प्रमुच्येत धनधान्यसमृद्धिमान् ॥ १७

हस्तौ द्वौ वरदाभये पुरुरुचौ पाशाङ्कुशौ बिभ्रतीं
तां वन्द्यां शशिखण्डमण्डितजटानेत्र त्रयोद्भासिनीम्।
हृष्यद्विद्रुमपाटलां त्रिजगतां वन्दे सदा सुन्दरीं
सा दद्याद्भुवनेश्वरी भगवती भद्राणि हृद्यानि नः ॥ १८

—★—

# भुवनेश्वर्यष्टोत्तरशतनामावलिः

ओं उमायै नमः। संमोहिन्यै। देव्यै। सुन्दर्यै। भुवनेश्वर्यै। एकाक्षर्यै। महामायायै। एकाङ्ग्यै। एकनायिकायै। बहुरूपायै। महारूपायै। स्थूलसूक्ष्मपरायणायै। बिन्दुस्वरूपायै। निर्वाण्यै। संग्रामजयनायिकायै। महोन्नतायै। परायै। शक्त्यै। योगिन्यै। पापनाशिन्यै नमः। २०

ओं आपत्कालदयारूपायै नमः। वैष्णव्यै। भद्रकालिकायै। भक्तप्रियायै। महाघोरायै। हरिब्रह्मादिपूजितायै। शिवरूपायै। विष्णुरूपायै। ब्रह्मरूपायै। सरस्वत्यै। त्रिशूलिन्यै। डमरुकपाशाङ्कुशधरायै। जयायै। खड्गखेटधरायै। देव्यै। खड्गिन्यै। चक्रधारिण्यै। दुर्गादेव्यै। जगद्धात्र्यै। समस्तशिवनायिकायै नमः। ४०

ओं पुराण्यै नमः। पुण्यरूपायै। पवित्रायै। भद्रमङ्गलायै। रुद्राण्यै। पार्वत्यै। इन्द्राण्यै। शङ्करार्धशरीरिण्यै। नारायण्यै। महालक्ष्म्यै। महादेव्यै। सुमङ्गलायै। अकारादिक्षकारान्तायै। अष्टत्रिंशत्कलात्मिकायै। मातृकायै। सप्तरूपायै। शरीरोत्पत्तिकारिण्यै। सकलप्राणभूतेभ्यै। सृष्टिस्थित्यन्तकारिण्यै। अघोरात्मने नमः॥ ६०

ओं महारौद्र्यै नमः। महत्तायै। मूलनायिकायै। महाज्ञेयायै। महाज्ञानिन्यै। इन्द्ररूपायै। महेश्वर्यै। ईशान्यै। लोकमात्रे। तत्पुर्ष्यै। विन्ध्यवासिन्यै। सद्योजातायै। कलारूपायै। सोमसूर्याग्निलोचनायै। गुणत्रयायै। क्रियारूपायै। धात्र्यै। त्रिपुरभैरव्यै। सिंहयानायै। योगीन्द्रायै नमः। ८०

ओं धर्मरूपायै नमः । सुवासिन्यै । परब्रह्मनिवासायै । बहुरूपायै । धारिण्यै। हरपत्न्यै । महालक्ष्म्यै । ब्रह्मरूपायै । बहुप्रदायै । त्रिशूलडमरू शक्तिपाशाङ्कुशासुदर्शनायै । खड्गखेटक खट्वाङ्गशूलिन्यै । शङ्खधारिण्यै । अरूपायै । कामरूपायै । तपस्विन्यै । कालरूपिण्यै । षोडश्यै । त्रिपुरादेव्यै । ह्रींकार्यै । परमेश्वर्यै नमः । १००

ओं कुमार्यै नमः । पिङ्गल्यै । वारुण्यै । मदमोहितायै । महेश्यै । विश्वमात्रे । नमितायै । भवनायिकायै नमः । १०८



# श्री ललिताष्टोत्तरशतनामस्तोत्रम्

शिवा भवानी कल्याणी गौरी काली शिवप्रिया ।
कात्यायनी महादेवी दुर्धार्या चण्डिका भवा ।। १

चन्द्रचूडा चन्द्रमुखी चन्द्रमण्डलवासिनी ।
चन्द्रहासकरा चन्द्रहासिनी चन्द्रकोटिभा ।। २

चिद्रूपा चित्कला नित्या निर्मला निष्कला कला ।
भाव्या भवप्रिया भव्यरूपिणी कुलभाषिणी ।। ३

कविप्रिया कामकला कामदा कामरूपिणी ।
कारुण्यसागरा काली संसारार्णवतारिका ।। ४

दूर्वाभा दुष्टभयदा दुर्जया दुरितापहा ।
ललिता राज्यदा सिद्धा सिद्धेशी सिद्धिदायिनी ।। ५

शर्मदा शान्तिरव्यक्ता शङ्खकुण्डलमण्डिता ।
शारदा शाङ्करी साध्वी श्यामला कोमलाकृतिः ।। ६

पुष्पिणी पुष्पबाणांबा कमला कमलानना।
पञ्चबाणस्तुता पञ्चवर्णरूपा सरस्वती ।। ७

पञ्चमी परमा लक्ष्मीः पावनी पापहारिणी।
सर्वज्ञा वृषभारूढा सर्वलोकवशङ्करी ।। ८

सर्वस्वतन्त्र सर्वेशी सर्वमङ्गलकारिणी।
निरवद्या नीरदाभा निर्मला निश्चयात्मिका ।। ९

निर्मदा नियता चारुः निष्कामा निगमालया।
अनादिबोधा ब्रह्माणी कौमारी गुरुरूपिणी ।। १०

वैष्णवी समयाचारा कौलिनी कुलदेवता।
सामगानप्रिया सर्ववेदरूपा सरस्वती ।। ११

अन्तर्यागप्रिया नन्दा बहिर्यागपरार्चिता।
वेणुगानरसानन्दा अर्धोन्मीलितलोचना ।।१२

दिव्यचन्दनदिग्धाङ्गी सर्वसाम्राज्यरूपिणी।
तरङ्गीकृतसापाङ्गवीक्षारक्षितसज्जना ।। १३

सुधापानसमुद्वेलहेलामोहित धूर्जटिः।
मतङ्गमुनिसंपूज्या मतङ्गकुलभूषणा ।। १४

मकुटाङ्गदमञ्जीरमेखलादामभूषिता।
ऊर्मिलाकिङ्किणीरत्नकङ्कणादिपरिष्कृता ।। १५

मल्लिकामालतीकुन्दमन्दाराञ्चितमस्तका।
ताम्बूलकवलोदञ्चत्कपोलतलशोभिनी ।। १६

त्रिमूर्तिरूपा त्रैलोक्यसुमोपानतसुप्रभा।
श्रीमच्चक्रादिनगरी साम्राज्यश्रीस्वरूपिणी ।। १७

—★—

# ललिताष्टोत्तरशतनामावलिः।

ओं शिवायै नमः। भवान्यै। कल्याण्यै। गौर्यै। काल्यै। शिवप्रियायै। कात्यायन्यै। महादेव्यै। दुर्धायियै। चण्डिकायै। भवायै। चन्द्रचूडायै। चन्द्रमुख्यै। चन्द्रमण्डलवासिन्यै। चन्द्रहासकरायै। चन्द्रहासिन्यै। चन्द्रकोटिभायै। चिद्रूपायै। चित्कलायै। नित्यायै नमः। २०

ओं निर्मलायै नमः। निष्कलायै। कलायै। भाव्यायै। भवप्रियायै। भव्यरूपिण्यै। कुलभाषिण्यै। कविप्रियायै। कामकलायै। कामदायै। कामरूपिण्यै। कारुण्यसागरायै। काल्यै। संसारार्णवतारिकायै। दूर्वाभायै। दुष्टभयदायै। दुर्जयायै। दुरितापहायै। ललितायै। राज्यदायै नमः। ४०

ओं सिद्धायै नमः। सिद्धेश्यै। सिद्धिदायिन्यै। शर्मदायै। शान्त्यै। अव्यक्तायै। शङ्खकुण्डलमण्डितायै। शारदायै। शाङ्कर्यै। साध्व्यै। श्यामलायै। कोमलाकृत्यै। पुष्पिण्यै। पुष्पबाणाम्बायै। कमलायै। कमलाननायै। पञ्चबाणस्तुतायै। पञ्चवर्णरूपायै। सरस्वत्यै। पञ्चम्यै नमः। ६०

ओं परमायै नमः। लक्ष्म्यै। पावन्यै। पापहारिण्यै। सर्वज्ञायै। वृषभारूढायै। सर्वलोकवशङ्कर्यै। सर्वस्वतन्त्रायै। सर्वेश्यै। सर्वमङ्गलकारिण्यै। निरवद्यायै। नीरदाभायै। निर्मलायै। निश्चयात्मिकायै। निर्मदायै। नियतायै। चार्वै। निष्कामायै। निगमालयायै। अनादिबोधायै नमः। ८०

ओं ब्रह्माण्यै नमः। कौमार्यै। गुरुरूपिण्यै। वैष्णव्यै। समयाचारायै। कौलिन्यै। कुलदेवतायै। सामगानप्रियायै। सर्ववेदरूपायै। सरस्वत्यै। अन्तर्यागप्रियायै। नन्दायै।

बहिर्यागपरार्चितायै । वेणुगानसानन्दायै । अर्धोन्मीलित-लोचनायै। दिव्यचन्दनदिग्धाङ्ग्यै । सर्वसाम्राज्यरूपिण्यै । तरङ्गीकृतसापाङ्ग-वीक्षारक्षितसज्जनायै । सुधापानसमुद्वेलहेला-मोहितधूर्जटये। मतङ्गमुनिसंपूज्यायै नमः । १००

ओं मतङ्गकुलभूषणायै नमः । मकुटाङ्गदमञ्जीर मेखलादामभूषितायै। ऊर्मिलाकिङ्किणीरत्नकङ्कणादिपरिष्कृतायै। मल्लिकामालतीकुन्दमन्दाराञ्चितमस्तकायै । ताम्बूलकवलोदञ्चत् कपोलतलशोभिन्यै। त्रिमूर्तिरूपायै। त्रैलोक्यसुमोपानतसुप्रभायै। श्रीमच्चक्रादिनगरीसाम्राज्य-श्रीस्वरूपिण्यै नमः । १०८

—★—

# धर्मशास्त्रष्टोत्तरशतनामस्तोत्रम्

अस्य श्री धर्मशास्तुः अष्टोत्तरशतनामस्तोत्र महामन्त्रस्य, ब्रह्मा ऋषिः, अनुष्टुप् छन्दः श्रीमहाशास्ता देवता, ह्रीं बीजं, श्रीं शक्तिः, क्लीं कीलकं, श्री महाशास्तुः प्रीत्यर्थे जपे विनियोगः । (ह्रामित्यादि न्यासः ) ध्यानम्-

त्रिगुणितमणिपद्मं वज्रमाणिक्यदण्डं,
सितसुमशरपाशं इक्षुकोदण्डकाण्डम्।
मधुकृतमधुपात्रं बिभ्रतं हस्तपद्मे
हरिहरसुतमीडे चक्रमन्त्रात्ममूर्तिम्।।

महाशास्ता विश्वशास्ता लोकशास्त्रे नमो नमः ।
धर्मशास्ता वेदशास्ता कालशास्ता गजाधिपः ।। १

गजारूढो गणाध्यक्षः व्याघ्रारूढो महाद्युतिः ।
गोप्ता गीर्वाणसंसेव्यः गतातङ्को गदाग्रणीः ।।२

ऋग्वेदरूपो नक्षत्रः चन्द्ररूपो वलाहकः ।
दूर्वाश्यामो महारूपः क्रूरदृष्टिरनामयः ॥ ३

त्रिनेत्र उत्पलाकारः कालहन्ता नराधिपः ।
खण्डेन्दु मौलितनयः कल्हारकुसुमप्रभः ॥ ४

मदनो माधवसुतो मन्दारकुसुमार्चितः ।
महाबलो महोत्साहो महापापविनाशनः ॥ ५

महाशूरो महाधीरो महासर्प विभूषणः ।
असिहस्तः शरधरः हालाहलधरात्मजः ॥ ६

अर्जुनेशोऽग्निनयनः अनङ्गमदनातुरः ।
दुष्टग्रहाधिपः श्रीदः शिष्टरक्षणदीक्षितः ॥ ७

कस्तूरीतिलको राजशेखरो राजसत्तमः ।
राजराजार्चितो विष्णुपुत्रो वनजनाधिपः ॥ ८

वर्चस्करो वरुरुचिः वरदो वायुवाहनः ।
वज्रकायः खड्गपाणिः वज्रहस्तो बलोद्धतः ॥ ९

त्रिलोकज्ञश्चातिबलः पुष्कलो वृत्तपावनः ।
पूर्णाधवः पुष्कलेशः पाशहस्तो भयापहः ॥ १०

फट्काररूपः पापघ्नः पाषण्डरुधिराशनः ।
पञ्चपाण्डवसंत्राता परपञ्चाक्षराश्रितः ॥ ११

पञ्चवक्त्रसुतः पूज्यः पण्डितः परमेश्वरः ।
भवतापप्रशमनः भक्ताभीष्टप्रदायकः ॥ १२

कविः कवीनामधिपः कृपालुः क्लेशनाशनः ।
समोऽरूपश्च सेनानीः भक्तसंपत्प्रदायकः ॥ १३

व्याघ्रचर्मधरः शूली कपाली वेणुवादनः ।
कलारवः कम्बुकण्ठः किरीटादि विभूषितः ।। १४

धूर्जटिर्वीरलियः वीरो वीरेन्द्रवन्दितः ।
विश्वरूपो वृषपतिः विविधार्थफलप्रदः ।। १५

दीर्घनासो महाबाहुः चतुर्बाहुर्जटाधरः ।
सनकादिमुनिश्रेष्ठस्तुत्यो हरिहरात्मजः ।। १६



# श्रीधर्मशास्तुः अष्टोत्तरशतनामावलिः

ओं महाशास्त्रे नमः । विश्वशास्त्रे । लोकशास्त्रे । धर्मशास्त्रे । वेदशास्त्रे । कालशास्त्रे । गजाधिपाय । गजारूढाय । गणाध्यक्षाय । व्याघ्रारूढाय । महाद्युतये । गोप्त्रे । गीर्वाणसंसेव्याय । गतातङ्काय । गदाग्रण्यै । ऋग्वेदरूपाय । नक्षत्राय । चन्द्ररूपाय । वलाहकाय । दूर्वाश्यामाय नमः २०

ओं महारूपाय नमः । क्रूरदृष्टये । अनामयाय । त्रिनेत्राय । उत्पलाकाराय । कालहन्त्रे । नराधिपाय । खण्डेन्दुमौलितनयाय । कल्हारकुसुमप्रियाय । मदनाय । माधवसुताय । मन्दारकुसुमार्चिताय । महाबलाय । महोत्साहाय । महापापविनाशनाय । महाशूराय । महाधीराय । महासर्पविभूषणाय । असिहस्ताय । शरधराय नमः । ४०

ओं हालाहलधरात्मजाय । अर्जुनेशाय । अग्निनयनाय । अनङ्गमदनातुराय । दुष्टग्रहाधिपाय । श्रीदाय । शिष्टरक्षणदीक्षिताय । कस्तूरीलिकाय । राजशेखराय । राजसत्तमाय । राजराजार्चिताय । विष्णुपुत्राय । वनजनाधिपाय । वर्चस्कराय ।

वररुचये। वरदाय। वायुवाहनाय। वज्रकायाय। खड्गपाणये। वज्रहस्ताय नमः। ६०

ओं बलोद्धताय। त्रिलोकज्ञाय। अतिबलाय। पुष्कलाय। वृत्तपावनाय । पूर्णाधवाय । पुष्कलेशाय । पाशहस्ताय । भयापहाय। फट्कारररूपाय। पापघ्नाय। पाषण्डरुधिराशनाय। पञ्चपाण्डवसंत्रात्रे। परपञ्चाक्षराश्रिताय । पञ्चवक्त्रसुताय । पूज्याय। पण्डिताय । परमेश्वराय । भवतापप्रशमनाय । भक्ताभीष्टप्रदायकाय नमः। ८०

ओं कवये नमः। कवीनामधिपाय। कृपालवे। क्लेशनाशनाय। समाय । अरूपाय । सेनान्यै । भक्तसंपत्प्रदायकाय। व्याघ्रचर्मधराय। शूलिने। कपालिने। वेणुवादनाय। कलारवाय। कम्बुकण्ठाय। किरीटादिविभूषिताय। धूर्जटये। वीरनिलयाय। वीराय। वीरेन्द्रवन्दिताय । विश्वरूपाय । वृषपतये । विविधार्थफलप्रदाय । दीर्घनासाय । महाबाहवे । चतुर्बाहवे। जटाधराय। सनकादिमुनिश्रेष्ठस्तुत्याय। हरिहरात्मजाय नमः। १०८

—★—

शिवं शैवं भावं शिवमपि शिवाकारं अशिवं
न सत्यं शैवं तच्छिवमपि शिवं शैवमनिशम्।
शिवं शान्तं मत्वा शिवपरमतत्वं शिवमयं
न जाने तत्तत्वं शिवमिति नमो वेद्य शिव ते॥

शिव शिवेति शिवेति शिवेति वा
भव भवेति भवेति भवेति वा।
हर हरेति हरेति हरेति वा
भज मनः शिवमेव निरन्तरम्॥

—★—

**ஸ்ரீ மஹாபெரியவாள் ட்ரஸ்ட்**
**குருக்ருபா, 94, I.T.I. Layout, MSRIT**
**பெங்களூர் - 560 054.**

**ஸ்தோத்திர நூல்கள் வெளியீடு**

தொகுத்தளித்தவர் :
**வைத்ய S.V. ராதாகிருஷ்ண சாஸ்திரீ, ஸ்ரீரங்கம்**

தேவீநாம ஸ்தோத்திர மஞ்ஜரீ - 2 பாகங்கள்
ஸ்ரீ வாஞ்ச்ய க்ஷேத்ர மாஹாத்ம்யம்
ஸ்ரீ நடராஜ நாமமஞ்ஜரீ
ஸ்ரீ நடராஜ ஸ்தவமஞ்ஜரீ
ஸ்ரீ பாலாஸபர்யா
ஸ்ரீ சிவநாம மஞ்ஜரீ - 2 பாகங்கள்
ஸ்துதித்ரயீ
ஸ்ரீ மீனாக்ஷீ ஸ்தோத்திர மஞ்ஜரீ
ஸ்ரீ ஸுப்ரம்ஹ்ய ஸ்தவமஞ்ஜரீ
ஸ்ரீ தத்தாத்ரேயஸ்துதி மஞ்ஜரீ
ஸ்ரீ விஷ்ணுஸ்துதி மஞ்ஜரீ - 3 பாகங்கள்
ஸ்ரீ பகவதீ ஸ்துதிமஞ்ஜரீ
ஸ்ரீ ஆத்மநாதஸ்துதி மஞ்ஜரீ

கிடைக்குமிடங்கள் :

ஸ்ரீமதி **P. விஜயா,** 11, (Plot No. 7), கணபதி தெரு,
St.தாமஸ் நகர், சென்னை - 600 091,
Phone : **22422622**

—*—

**ஸ்ரீ பகவந்நாமா பப்ளிகேஷன்ஸ்,**
2-3, விநாயகம் தெரு,
மேற்கு மாம்பலம், சென்னை-600 033,
**Phone : 044-24893736**

